मनुः[1]

अल्पाऽन्नाभ्यवहारेण रहःस्थानासनेन च ।
ह्रियमाणानि विषयैरिन्द्रियाणि निवर्तयेत् ॥
इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥

यमः

निर्ममो निरहंकारो निरपेक्षो निरामिषः ।
य आत्मनाऽसहायेन विचरेत् स सुखी भवेत् ॥
शुचिपिप्पलकं चैव त्रिपिष्टपकमण्डलुम् ।
कन्थां पवित्रं पुण्यं च लघुमात्रः परिव्रजेत् ॥
अध्वा सूर्येण निर्दिष्टे कीटवत्पर्यटेन्महीम् ।
एकवासा अवासा च एकदृष्टिरलोलुपः ॥
एक एव चरेद्भैक्ष्यं धर्मवानविहिंसकः ।
अश्वस्तनविधानं तु सुमतिः सुसमाहितः ॥
शून्यागारे गुहावासी पर्वतेषु नदीषु च ।
ग्रामान्ते वृक्षमूले वा शुचौ देवकुलेऽपि वा ॥
तत्राऽऽसीनः प्रसन्नात्मा धारणास्त्रिविधाश्चरेत् ।
पर्यंकं दण्डकोणेषु युञ्जीताऽसौ यथाविधि ॥
नित्यं स्थण्डिलशायी स्यादनित्यां वसतिं वसेत् ।
अरण्यनित्यो मुण्डस्स्यान्मनसा ज्ञानमभ्यसेत् ॥

तथा

सायं प्रातर्नतृप्येत न प्रसज्येत भोजने ।
नेंद्रियार्थेषु सज्जेत कदाचिदपि कामतः ॥

1 ६, ५९–६०.

योऽवाऽस्य दक्षिणं बाहुं चन्दनेनानुलेपयेत् ।
वामं वाऽप्यस्य यस्तक्षेत् समौ तौ पुरुषौ मतौ ॥
एवमस्य भवेद्भावो नित्यमेव प्रियाऽप्रिये ।
इष्टे वा यदि वा द्वेष्ये समः सर्वत्र वर्तयेत् ॥
समः साधौ च पापे च शत्रौ मित्रे समो भवेत् ।
शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥
न प्रहृष्यति संमाने नाऽपमाने च क्रुध्यति ।
रागद्वेषौ समौ यस्य स मुनिः सर्वनिस्पृहः ॥
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वाऽऽघ्राय च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥
अरोषतोषः समलोष्टकाञ्चनः
प्रहीणशोको गतसन्धिविग्रहः ।
व्यपेतनिन्दास्तुतिरप्रिया-
ऽप्रियश्चरत्युदासीनवदेव भिक्षुः ॥

'पिप्पलकं' सीवनसूत्रं 'लिपिष्टचं' लिपदिका 'लघुमात्रः' अल्पपरिकरः । अध्वा सूर्येण निर्दिष्टस्तस्य भवेदिति शेषः । दिवा गच्छेदिति यावत् । 'एकवासा' एकपरिधानवासाः । 'अवासास्तु' वासोरहितः । 'एकशाटीपरिहितोऽजिनेन वेति' वसिष्ठवचनात्[1] । 'पर्यंकदण्डकोणेष्वि'ति पर्यंकः पर्यस्तिकादण्डः, स्तंभादिः 'कोणो' गृहादीनाम् । एतेषु कृताऽवष्टम्भ इति शेषः । केचित्तु पर्यंकदण्डकोणपदाभिधेयासनभेदेषु सत्सु युञ्जीतेति व्याचक्षते । 'युञ्जीत' योगं कुर्यात् । 'अनित्यां वसतिं वसेदित्ये'कत्र न चिरं वसे-

1 वसिष्ठ, १०, ९-१०—एकशाटीपरिहित ।
अजिनेन वा गोप्रलूनैस्तृणैरवस्तृतशरीर ॥

दित्यर्थः । 'सायंप्रातर्नतृप्येत' इत्यत्रैव वा हेतुः । 'प्रसज्येत भोजने' इति [1]तक्षणं शास्त्रेण ।

<u>महाभारते</u>

प्रदक्षिणं प्रसत्यं च ग्राममध्येन वा चरेत् ।
भैक्षचर्यामनापन्नो न गच्छेत्पूर्वकेतितः ॥
वानप्रस्थगृहस्थाभ्यां न सङ्गृह्येत कर्हिचित् ।
येन केन चिदाच्छन्नो येन केनचिदासिनः ॥
यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ।

'प्रदक्षिण' मित्यादि प्रकारत्रयं 'पर्याकुलभिक्षा'-चरणनिवृत्त्यर्थम् । 'अनापन्नः' आपद्रहितः । 'केतितो' निमन्त्रितः ।

<u>शङ्खलिखितौ</u>

त्रिदण्डकुण्डी, पक्ष्मपवित्रप्रयोजनापेक्षी, मुण्डः, काषायवासा, भैक्षवृत्तिरसंविभागरुचिरभिशस्तपतितनिन्दितोपकृतवर्जी च, कौपीनमात्रवासा, व्रणमात्रलेपनपरितुष्टः, पक्वकषायः, कालाकांक्षी, सदायुक्त आत्मरतिरसंविधानशीलः, कुहुककल्कदम्भापवर्जितः, सदा नैकग्रामवासी, सङ्गदोषात् पर्यटनशीलः, सदाऽऽत्मज्ञानविवेकार्थकुशल, ऊर्द्ध्वं वर्षाभ्यो नैकस्थानवासाभिरतिः, नैकदेशमूत्रपुरीष उद्धृतपरिपूताभिरद्भिः कार्यं कुर्यात् । दण्डपवित्रपाणि, द्विपरिधानी, कुशचीरवरफलक, वासो शीतप्रावरणमेकम् ।

'त्रिदण्डकुण्डी' त्रिदण्डकमण्डलुयुक्तः । 'पक्ष्मपवित्रप्रयोजनापेक्षी' । पक्ष्मशब्दोऽत्रगोवालवचनः । पक्ष्म-

1 लक्षण for तक्षणम्—स

पवित्रयोरर्थः प्रयोजनं पात्रशुद्धिजलपावनादि। कौपीनमात्रवासाः' गुदप्रदेशमात्राच्छादनवसनः। 'मात्र'शब्दोऽत्राधिकपरिमाणनिवृत्यर्थः। 'व्रणमात्रलेपनपरितुष्टः।' 'व्रण' शब्दोऽत्र शरीरपरः। 'लेपन'माहारस्तेन शरीरयात्रामात्रेणाऽऽहारेण परितुष्टो भवेत्। न 'रसलालस'इत्यर्थः। 'कालाकांक्षी'जीवितकालप्रतीक्षां कुर्यात्। न तु वैराग्यादिना। 'अविहितोपायेनाऽऽत्मानं व्यापादयेदि'त्यर्थः। 'असंविधानः' असञ्चयवान्। 'कल्कः'पापम्। 'आत्मज्ञानविवेकार्थकुशलः'। आत्मविषयज्ञानं आत्मज्ञानम्। तत्र'विवेको' देहाद्यतिरिक्तस्याऽऽत्मतत्वस्याऽवबोधः। तस्मिन्नेवार्थे कुशलः। 'द्विपरिधानी'द्वे परिधाने कौपीनकटिवेष्टनाख्ये यस्य स तथा। 'फलकं' वार्क्षं। 'शीतप्रावरणं' शीतनिवारणार्थमुपरि वासो धारयेत्।

पुनः <u>शङ्खलिखितौ</u>

शीतोष्णवातवर्षाणि नाऽत्यन्तं परिहरेत्। नाऽऽत्मनः प्रतीकारं कुर्यात्। न कारयेन्नानुमन्येत।

'प्रतीकारं' व्याध्युपद्रवे जात इति शेषः।

<u>गौतमः</u>[1]

अनिचयो भिक्षुः। ऊर्द्ध्वरेताः ध्रुवशीलो वर्षासु भिक्षार्थी ग्राममियात्। जघन्यमनिवृत्तं चरेत्। निवृत्ताशीः। वाक्चक्षुःकर्मसंयोगः[2]। कौपीनाच्छादनार्थं वासो बिभृयात्। प्रहीणमेके निर्णिज्य। [3]ना विप्रयुक्तमोषधिवनस्पतीनामङ्ग-

1 ३, ११—२५

2 सयोग इति मस्करिपाठ (पृ ७०)

3 निर्णिज्य (*Ib* पृ ७१)

मुपाददीत। न द्वितीयामपर्त्तु रात्रिं ग्रामे वसेत्। मुण्डः शिखी वा। [1]वर्जयेज्जीववधम्। समो भूतेषु। हिंसानुग्रहयोरनारम्भी।

'ध्रुवशीलो वर्षासु' ग्रामाद्ग्रामान्तरं न गच्छेत् इत्यर्थः। 'जघन्य' शब्दोऽत्र गृहस्थभोजनक्रियातः पश्चादर्थे। अनिवृत्तमिति क्रियाविशेषणम्। तेन भिक्षार्थं गतः सन् प्रत्याख्यातो न पुनस्तस्मिन्नेव दिवसे प्रत्यावृत्य भिक्षेतेत्यर्थः। 'निवृत्ताशी'रात्मनः परस्य वा [2]शुभाशंसनरहितः। 'प्रहीणं' परित्यक्तं। 'निर्णिज्य' प्रक्षाल्य 'अपर्तुः'वर्षर्तुवर्जः। 'मुण्डः शिखी वा' सर्वमुण्डः शिखावर्जं मुण्डो वा। जटिलत्वनिवृत्यर्थोऽयमारंभः। इति भर्तृयज्ञासहायमस्करिणः[3]।

विष्णुः

[4]निराशीः स्यात्। निर्नमस्कारः।

देवलः

परिव्राजको दीक्षाप्रभृति सर्वारम्भान् परित्यजेत्। चतुर्मासान्तरं केशश्मश्रूण्यपनयेत्। नाऽधौतः श्मश्रुरोमाणि। विद्याचारकुलवयोवृत्तानि परेभ्यो न कथयेत्।

'सर्वारम्भान्' गृहादीनामिति शेषः। चत्वारो मासा अन्तरं यत्र तत्रेति क्रियाविशेषणम्। 'अधौतः' अस्नातः।

1 बीजवधम्—मस्करि (पृ ७२), and स

2 शुभाऽशुभाशसनरहित —स

3 This citation is important as it shows that besides *Maskarin*, both *Asahāya* and *Bhartryajña* wrote *bhāsyās* on *Gautama dharma Sūtra* It also furnishes a lower limit to the dates of these two writers. *Bhartryajña* is so far known only as the author of a lost श्राद्धकल्प and a commentary on *Pāraskara Gṛhya Sūtra*

4 ९६, २१–२२

पुनर्देवलः

स भिक्षुररागानुक्रोशप्रधानः कषायी मुण्डितः त्रिदण्डकमण्डलुपवित्रपात्रपादुकासनः, कन्थामात्रो, ज्ञानरतिरात्महृष्टः, बन्धुभिरसंपृक्तो, निरपेक्षः। परातिक्रम, क्षीणविगतपापः, सममृत्काञ्चनः, स्वमात्रा, स्वव्ययसक्तो, मध्यस्थः, तुल्यारिमित्रो, निष्परिग्रहो, ब्रह्मवादी, मङ्गलव्यवहारसंस्कारजीव, शिल्पारलधनधान्यविषयोपभोगसंपर्केर्ष्यादर्पमोहमायाहर्षविरोधविस्मयविवादत्रासवितर्कतन्द्र - श्चेति यतिधर्माः।

वसिष्ठः[1]

मुण्डोऽममोऽपरिग्रहः। ससागाराण्यसंकल्पितानि चरेद्भैक्षं विधूमे सन्नमुसले। एकशाटीपरिहितः। अजिने यो गोप्रलूनैस्तृणैरवस्तृतशरीरः। स्थण्डिलशायी। अनित्यां वसतिं वसेत्। ग्रामान्ते देवगृहे शून्यागारे वृक्षमूले वा। मनसा ज्ञानमधीयानः न ग्राम्यपशूनां दर्शने विचरेत्।

अथाप्युदाहरन्ति।

अरण्यनित्यस्य जितेन्द्रियस्य
सर्वेन्द्रियप्रीतिनिवर्तकस्य।
अध्यात्मचिन्तागतमानसस्य
ध्रुवा ह्यनावृत्तिरुपेक्षकस्य॥

अव्यक्तलिङ्गो व्यक्ताचारोऽनुन्मत्त उन्मत्तवेषः।

अथाप्युदाहरन्ति।

1 १०, ६–२०

न शब्दशास्त्राभिरतस्य मोक्षो
न चापि लोकग्रहणे रतस्य ।
न भोजनाच्छादनगर्वितस्य
न चाऽपि रम्यावसथप्रियस्य ॥

[1]न कुध्यां नोदके सङ्गो न चैले न त्रिपुष्करे ।
नागारे नासने नान्ने यस्य वै मोक्षवित्तु सः ॥ इति ॥

ब्राह्मणकुले यल्लभते तद्भुञ्जीत । सायंप्रातर्मधुमांसवर्जनं, न च तृप्येत् । ग्रामे वा वसेत् । अजिह्मोऽशठो (शरणो) संकुसुकः नेन्द्रियसङ्गं कुर्वीत केनचित् । उपेक्षकः सर्वभूतानां [हिंसानुग्रहपरिहारेण ।] पैशुन्यमत्सराभिमानाहंकाराश्रद्धानार्जवात्मस्तवपरगर्हादम्भलोभ [मोहक्रोधासूया] विवर्जनं सर्वाश्रमाणां धर्मिष्ठः यज्ञोपवीत्युदककमण्डलुहस्तः शुचिर्ब्राह्मणात् वृषलान्नवर्जनं न हीयते ब्रह्मलोकात्[2] ।

'गो प्रलूनै स्तृणैरवस्तृतशरीरः', गोभिच्छिन्नैः तृणैराच्छादितशरीरः । 'न ग्राम्यपशूनां दर्शने विचरेत् ।' यत्र ग्राम्यपशून् पश्यन्ति न तत्र नित्यमासीत । किंत्वेकान्तनिरतेन भवितव्यमित्यर्थः । 'अव्यक्तलिङ्गः' न लिङ्गविशेषधारण एव यत्नपर स्यात् । किं [3]तु व्यक्ताचारो भवेत् । शौचादिप्रमादी न स्यादित्यर्थः । तदुक्तं महाभारते

भूषितोऽपि चरेद्धर्मं यत्र तत्राऽऽश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥ इति ।

1 Fol 9 of Nagpur Ms begins here

2 १०, २३—३१

3 किन्तु व्यक्ताचारो भवेत् इति ना, स and वी मि–मोक्ष , पृ ८२

'अनुन्मत्त' उन्मत्तवेषेण चरेदित्यन्वयः। लोके पूजा-परिहारार्थं चैतत् 'त्रिपुष्करे' त्रिदण्ड्यामिति कश्चित्। भिक्षापात्रधारे काष्ठत्रये चेति रोगाद्यापत्स्वेकान्नमपि भुञ्जीतेत्यनुज्ञातम्। 'धर्मिष्ठः' धर्म्येषु मध्ये प्रधानतमः।

हारीतः

ससूर्यचक्षुषोद्धृतपरिपूताभिरद्भिः कार्यं कुर्याद्दिवा क्रोशादियोजनान्तं गच्छेत्। शून्यदुर्गवर्ज्जम् क्रोशादियोजनान्तं गच्छेत्।

क्रोशादर्वाक् योजनात्परतो न गच्छेदित्यर्थः। 'शून्यं' प्रान्तरं यदि न स्यात्।

पुनर्हारीतः

केतनं चाऽरियोगं[1] च आशिषं कोपमेव च।
वर्जयेच्च समं दद्याद्भावं सर्वत्र सर्वशः॥
हिंसाप्रवर्तके चैतान्नियोगात्कर्मसम्भवः।
आशिषः पुण्यविस्रंसः कोपसिद्धिविनाशकः॥
भिक्षोदकपवित्राद्या आर्जवं भिक्षुसत्क्रिया।
नरकाय नियोगाद्या उभयोरप्यसत्क्रिया॥
पूज्यमानः प्रवृत्तेषु वर्द्धते ब्रह्मतेजसा।
निवृत्तेस्तूपहन्येत समिद्धोऽग्निरिवाऽम्भसा॥
फलमग्नौ हुते यद्वत् प्रवृत्तेस्तद्वदाददत्।
भस्मन्येव हुते यद्वन्निवृत्तेस्तद्वदाददत्॥
तस्माद्भिक्षुः प्रवृत्तेषु आददीताऽप्यहिंसया।

1 वेतन वा नियोग च—वी मि मोक्ष, ८३, ना and स

'केतन'मत्र निमन्त्रणम्। 'नियोगः' पराज्ञानुष्ठानम्। 'भिक्षोदकपवित्राद्या' इति 'आर्जव'मिति क्रियाविशेषणम्। तेन भिक्षाद्या ऋजुभावेन शोभना। भिक्षुसत्क्रियेत्यर्थः। नरकायेति'नियोगाद्या असत् क्रिया, उभयोरपि नरकायेत्यन्वयः।

पुनर्हारीतः

अहिंसा नाम सर्वभूतेष्वनभिद्रोहः। चक्षुर्मनोवाक्शरीरकर्मणां न्यासः। कर्मेन्द्रियबुद्धीन्द्रियाणां संयमः। अहंकारकामक्रोधलोभोपनिवर्तनम्। आशीःप्रतिष्ठासंगापरिग्रहो ममत्ववर्जनं कलहवादकुतूहलोपनिवृत्तिः, विनयः नित्यं [1]प्रत्याहितत्वं प्राणतत्परता ब्रह्मतद्गतमानसत्वम्। पूर्वापररात्रानुसंधानम्। प्राणायामसेवनं दिवापर्यटनं न रात्रौ न वर्षासु प्रकीर्णस्थाने न द्रुतावतरणम्। न विक्षोभणं नोत्क्षेपणं सद्भ्यो भैक्ष्यग्रहणं सुविमृष्टभोजनं सममानावमानता समदुःखोपभोगता समलोष्टाश्मकाञ्चनता जन्तूनां शरीरारूढानां, [2]यक्ष्मचामरव्यञ्जनवस्त्रान्तेन नीयमाने नाऽपसर्पकरणम्।

तस्मादचपलगमनासनपरिग्रहेण समदर्शिना भिक्षुणा व्यवहर्तव्यमाह।

[3]अभयं सर्वभूतेभ्यो दत्वा यश्चरते मुनिः।
तस्य सर्वेभ्यो भूतेभ्यो न भयं विद्यते क्वचित्॥
अमृतमध्ये वसति भयं तस्य न विद्यते।
मैत्रश्च सर्वभूतानामहिंसानिरतः शुचिः॥

1 परहितत्वम्—वी मि मोक्ष, पृ ८३

2 पद्यचामर—ना, रुक्मचामर वो मि मोक्ष, ८३

3 These two ślokas are missing in ना and म except the first hemistich

बौधायनः[1]

अथ यत्रोपनिषदमाचार्या ब्रुवते [तत्रोदाहरन्ति]— स्थानमौनवीरासनसवनोपस्पर्शनचतुर्थषष्ठाष्टमकालव्रतयुक्तस्य ।

कणपिण्याकयावकसक्तुदधिपयोव्रतत्वं चेति ।

तत्र मौने युक्तस्त्रैविद्यवृद्धैराचार्यैर्मुनिभिरन्यैर्वाऽऽश्रमिभिर्बहुश्रुतैर्दन्तैर्दन्तान् संन्धायाऽन्तर्मुख एव यावदर्थं संभावयेन्न यंत्र [यत्र] लोपो भवतीति विज्ञायते ।

स्थानमौनवीरासनानामन्यतमेन युक्तो न त्रयं सर्वं सन्निपातयेत् । यन्त्रगतश्चेद्यावन्मात्रमनुवर्तयेदापत्सु न यन्त्रलोपो भवतीति विज्ञायते ।

स्थानमौनवीरासनरसनोपस्पर्शनचतुर्थषष्ठाष्टमकालवृत्तयुक्तस्य ।

अष्टौ तान्यव्रतघ्नानि आपो मूलं [2]फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ इति ।

सायंप्रातरग्निहोत्रमन्त्रान् जपेत् । वारुणीभिस्सायं सन्ध्यामुपतिष्ठेत मैत्रीभिः प्रातः ।

अनग्निरनिकेतः स्यादशर्माऽशरणो मुनिः ।
भिक्षार्थी ग्राममन्विच्छेत् स्वाध्याये वाचमुत्सृजेदिति ।

1 २, १०, १७—३४

2 घृतमिति मुद्रित बौधायने (पृ २१), वी मि-मोक्ष, पृ ८३, फलम् इति पाठ आदृत

विज्ञायते च—[1]परिमिता वा ऋचः परिमितानि सामानि परिमितानि यजूंषि। अथैतस्यैवाऽन्तो नाऽस्ति यद्ब्रह्म तत् प्रतिगृणत आचक्षीत स प्रतिगर इति।

एवमेव आशरीरविमोक्षणाद्वृक्षमूलिको वेदसन्यासी।

वेदो वृक्षस्तस्य मूलं प्रणवः।

प्रणवात्मकं तत् ध्यायन् प्रणवो ब्रह्म ब्रह्मभूयाय कल्पत इति ह्योवाच प्रजापतिः।

सप्तभिर्व्याहृतिभिः ब्रह्मभाजनं प्रक्षालयेत् इति।

छागलेयः

अतः परं प्रवक्ष्यामि योगवृत्तिसमाश्रयम्।
त्यज धर्मानधर्मं च उभे सत्याऽनृते त्यज॥
अहिंस्रः सर्वभूतानां कर्मणा मनसा गिरा।

महाभारते[2]

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज।
उभे सत्यानृते त्यक्त्वा येन त्यजति तत्त्यज॥
त्यज धर्ममसंकल्पादधर्मं चाऽप्यहिंसया।
उभे सत्यानृते बुध्या बुद्धिं परमनिश्चयात्॥

दक्षः

एको भिक्षुर्यथोक्तस्स्यात् द्वौ चैव मिथुनं स्मृतम्।
त्रयो ग्रामाः समाख्याताः ऊर्ध्वन्तु नगरायते॥

1 तै स, ७, ३, ४

2 S'āntiparva, ३३९, ४४–४५

नगरं हि न कर्तव्यं ग्रामो वा मिथुनं तथा[1] ।
एतत्त्रयं हि कुर्वाणो स्वधर्माच्च्यवते यतिः ॥
राजादिवार्ता तेषां तु भिक्षा वार्ता परस्परम् ।
स्नेहपैशून्यमात्सर्यं सन्निकर्षान्न संशयः ॥
लाभपूजानिमित्तं हि व्याख्यानं शिष्यसंग्रहः ।
एते चाऽन्ये च बहवः प्रपञ्चाः कुतपस्विनाम् ॥
स्नानं शौचं तथा भिक्षा नित्यमेकान्तशीलता ।
भिक्षोश्चत्वारि कर्माणि पञ्चमं नोपपद्यते ॥
तपोजपैः कृशीभूताः व्याधिनाऽऽवसथार्हकाः ।
वृद्धा ग्रहगृहीतार्था ये चाऽन्ये विकलेन्द्रियाः ॥
नीरजाश्च स्ववाचैव भिक्षुर्नाऽऽवसथार्हकः ।

'पञ्चमं नोपपद्यत' इति एतादृशमुत्कृष्टमित्यर्थः ।

संवर्त्तः

अष्टौ भिक्षाः समादाय स मुनिः सप्त पञ्च वा ।
अखिलाः शोधयेत्तास्तु ततोऽश्नीयाद्द्विजोत्तमः ॥
अरण्ये निर्जने विप्रः पुनरासीत भक्तवान् ।
एकाकी संयतो नित्यमन्ये वाङ्मूर्तिभिर्युताः[2] ॥

वसिष्ठः[3]

मुण्डोऽममोऽपरिग्रहः। सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्षम् ।

1 स्मृतम् for तथा—ना
2 यति for युता —ना and स
3 १०, ६—७

यमः

चरेन्माधुकरीं वृत्तिं वल्मीकनिचयोपमाम् ।
अक्रोधनप्रहृष्टात्मा तपस्तद्धि सनातनम् ॥
प्राजापत्यसहस्रं च भैक्षं च तुलयाधृतम् ।
प्राजापत्यसहस्राद्धि भैक्षमेवाऽतिरिच्यते ॥

मनुः[1]

एककालं चरेद्भैक्षं न प्रसज्येत विस्तरे ।
भैक्षे प्रसक्तो हि यतिर्विषयेष्वभिसज्जति ॥
विधूमे सन्नमुशले व्यङ्गारे भुक्तवर्जने ।
वृत्ते शरावसंपाते भिक्षां नित्यं यतिश्चरेत् ॥
अलाभे न विषादी स्याद् लाभश्चैनं न हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः ॥
अभिपूजितलाभांस्तु जुगुप्सेतैव सर्वशः ।
अभिपूजितलाभैश्च यतिर्मुक्तोऽपि बध्यते ॥

तथा[2]

न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नाऽनुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥
न तापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः ।
[3]आकीर्णं भिक्षुकैर्वाऽन्यैरगारमुपसंव्रजेत् ॥

शङ्खः

सप्तागारं चरेद्भिक्षां भिक्षुकं नाऽनुभिक्षयेत् ।
नाऽऽस्वादयेद्रसनया नाऽश्नीयात्कस्यचिद्गृहे ॥

1 ६, ५५—५८
2 मनु, ६, ५०—५१
3 Supplied by ना and स

याज्ञवल्क्यः[1]

अप्रमत्तश्चरेद्भैक्ष्यं सायाह्नेऽनभिलक्षितः।
वहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः।

[2]बोधायनः

अथ भैक्षचर्या—ब्राह्मणानां शालीनयायावराणामप्रवृत्ते वैश्वदेवे भिक्षां लिप्सेत। भवत्पूर्वं प्रचोदयात्। गोदोहनमात्रमाकांक्षेत्। अथ भैक्षचर्यादुपावृत्तः शुचौ देशे न्यस्य हस्तपादान् प्रक्षाल्याऽऽचम्या ऽऽदित्यस्याग्रं निवेदयेत्। 'उदुत्यं[3] चित्रमिति[4]' ब्रह्मणे निवेदयति। '[5]ब्रह्म जज्ञानमि'ति विज्ञायत—आधानात् प्रभृति यजमान एवाऽग्नयो भवन्ति। तस्य प्राणो गार्हपत्यो ऽपानो ऽन्वाहार्यपचनोव्यान। आहवनीय उदानसमानौ सभ्यावसथ्यौ पञ्च वा एतेऽग्नयः। आत्मस्थाः आत्मन्येव जुहोति। स एव आत्मयज्ञ आत्मनिष्ठ आत्मप्रतिष्ट आत्मानं क्षेमं नयतीति विज्ञायते। भूतेभ्यो दयापूर्वं संविभज्य शेषमद्भिः संसृज्यौषधवत् प्राश्नीयात्। प्राश्नयाऽपश्चाऽऽचम्य ज्योतिष्मत्याऽऽ-

1 ३, ५९

2 २, १, ४

3 उदुत्य जातवेदस देव वहन्ति केतव ।
दृशे विश्वाय सूर्यम् ॥ तै सं १, ४, ४३

4 चित्र देवानामुदगादनीक चक्षुर्मित्रस्य वरुणस्याग्ने ॥
आप्रा द्यावापृथिवी अन्तरिक्ष॰ सूर्य आत्मा ।
जगतस्तस्थुषश्च ॥ तै स, १, ४, ४३

5 ब्रह्म जज्ञानं प्रथम पुरस्ताद्वि सीमतस्सुरुचो वेन आव ।
स बुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विव ॥(तै स, ४, २, ८, २)

दित्यमुपतिष्ठेत '[1]उद्वयं तमसस्परी'ति 'वाङ्म आसन्नसोः प्राण'इति[2] जपित्वा।

अयाचितमसंक्लृप्तमुपपन्नं यद्दृच्छया।
आहारमात्रं भुञ्जीत केवलं प्राणयात्रिकम्॥ इति

अथाप्युदाहरन्ति—

अष्टौ ग्रासा मुनेर्भोक्तुं षोडशाऽऽरण्यवासिनः।
द्वात्रिंशत्तु ग्रहस्थानाममितं ब्रह्मचारिणः॥
भैक्षं वा सर्ववर्णेभ्यः एकान्नं वा द्विजातिषु।
अपि व सर्ववर्णेभ्यो नत्वेकान्नं द्विजातिषु॥

देवलः

नित्यं प्रत्यादित्ये निवृत्तमुसलोद्यमे प्रशान्तधूमे काले ग्रामं प्रविश्य, भैक्षार्थं सर्वतः पर्यटन् अग्रतो युगमात्रमवलोक्य सङ्कल्पितानि विवृतद्वाराणि, अन्यवचनेऽनासक्तः प्रविशेत्। प्रविष्टः संकल्पप्रणयकुहकचिन्मयविलम्बनपरिहासयाचनाप्रेक्षितादि परिहरेत्। गोदोहनमात्रं स्थित्वा व्रजेत्। भिक्षां लब्ध्वा न प्रहृष्येत्। अलब्ध्वा न क्रुध्येत्। अन्त्यवसायिपरिपन्थि ज्ञातीश्वरप्रेतभूतकभिक्षां नोपलभ्यां प्रतिहतां गृह्णीयात्। आत्मनः संस्कृतां परबाधाकरीं वर्जयेत्। मधुमांसकुबीजविरहितां गृहीत्वा तद्भैक्षमेकान्ततो नैवपात्रेणान्येन वा तूष्णीं भूत्वा मात्रया भुञ्जीत।

1 'उद्वय तमसस्परि पश्यन्तो ज्योतिरुत्तरम्।
देव देवत्रा सूय अगन्म ज्योतिरुत्तमम्॥ तै ब्रा, २, ४

2 वाङ्म आसन्नसो प्राणोक्ष्योश्चक्षु कर्णयोश्रोत्र बाहुवो र्बलमूरुवो रोजोऽरिष्टा विश्वान्यङ्गानि तनूस्तनुवा मे सह नमस्ते अस्तु मा मा हि ॐ सी॥ तै स, ५, ५, ९, २

हारीतः

मृद्दारुविदलालाबुपर्णपाणिपात्रो वा भिक्षार्थं ग्रामं प्रविशेत्। नोच्छिष्टं दद्यान्नोत्सृजेत्। [न विकुत्सयेत्[1]] नाऽतिमात्रमश्नीयात्।

शङ्खलिखितौ

काष्ठालाबुविदलपार्थिवानामेकं भैक्षभाजनम्। न तस्य गोवालरज्वा सोदकं परिघर्षणम्। प्रात्यात्मिकं शौचम्। नाऽनाचामेन्न भूमौ निक्षिपेत्। नाऽशुचिः संस्पृशेत्। भुक्त्वाऽऽचान्तः पुनराचम्य द्रव्याण्यभ्युक्षयेद्युक्तं यच्चान्यदविरुद्धं स्यात्।

यमः

हिरण्मयानि पात्राणि कृष्णायसमयानि च।
यतीनां अन्यपात्राणि वर्जयेत्तानि भिक्षुकः॥
सुवर्णरूप्यपात्रेषु ताम्रकांस्यायसे शुचिः[2]।
भिक्षां दत्वा न धर्मोऽस्ति गृहीत्वा नरकं व्रजेत्॥

मनुः[3]

अतैजसानि पात्राणि तस्यस्युर्निर्व्रणानि च।
तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे॥

नरसिंहपुराणे

[4]स्थित्यर्थमात्मनो नित्यं भिक्षाटनमाचरेत्।
सायाह्ने काले विप्राणां गृहाणि विचरेन्मुनिः॥

1 [　　] Supplied by ना and स
2 कास्स्यायसेषु च—ना and स
3 ६, ५३
4 ६०, १२

उद्धाटयेच्च कवचं दक्षिणेन करेण च ।
पात्रं वामकरे स्थाप्य दक्षिणेनाऽवशोषयेत् ॥
स्यादर्था यावदाप्तेन तावद्भैक्षं समाचरेत्[1] ।
ततो निर्वर्त्य तत्पात्रं संस्थाप्यायम्य संयमी ॥
चतुरङ्गुलैः प्रच्छाद्य ग्रासमात्रं समाहितः ।
सर्वव्यञ्जनसंयुक्तं प्रथक् पात्रे निवेदयेत् ॥
सूर्यादिदेवभूतेभ्यो दत्वान्नं प्रोक्ष्यवारिणा ।
भुञ्जीत पर्णपुटके पात्रे वै वाग्यतो यतिः ॥
वटाश्वत्थार्कपत्रेषु कुम्भीतिंदुकपर्णयोः ।
कोविदारकरंजेषु न भुञ्जीत कदाचन ॥
मलाशाः सर्व उच्यन्ते यतयः कांस्यभोजने ।
कांसिकस्य तु यत्पापं गृहस्थस्य तथैव च ॥
कांस्यभोजी यतिः सर्वं प्राप्नुयात् किल्बिषं तयोः ।
भुक्तपात्ने यतिर्नित्यं क्षालयेन्मन्त्रपूर्वकम् ॥
न दुष्येताऽस्य तत्पात्नं यज्ञेषु चमसा इव ।
अथाऽऽचम्य निरुद्धासुः उपतिष्ठेत भास्करम् ॥
जपध्यानेतिहासेषु दिनशेषं नयेद् बुधः ।
कृतसन्ध्यस्ततो रात्निं नयेद्देवगृहादिषु ॥
हृत्पुण्डरीकनिलये ध्यात्वाऽऽत्मानमकल्मषम् ॥
यतिधर्मरतः शान्तः सर्वभूतसमो वशी ।
प्राप्नोति परमं स्थानं यत्प्राप्य न निवर्तते ॥

[2]याज्ञवल्क्यः

अभ्यसन्नथवा वेदं न्यस्तकर्मा वने वसन् ।
अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात् ॥

1 Lacuna in उद supplied by ना and स
2 अथवाऽप्यभ्यसन् वेदम् इति मिताक्षरपाठ —३, २०४

तथा

[1]ज्ञेयं चारण्यकमहं यदादित्यादवाप्नुयात् ।
योगशास्त्रं च यत्प्रोक्तं ज्ञेयं योगमभीप्सता ।

[1]मनुः

अधियज्ञं ब्रह्मजपेदाधि[2] दैविकमेव च ।
आध्यत्मिकं च सततं वेदान्ताभिहितं च यत् ॥
इदं शरणमज्ञानादिदमेवं विजानताम् ।
इदमन्विच्छतां स्वर्गं मिदमान्नंत्यमिच्छताम् ॥

'अधियज्ञं' यज्ञविधायकं ब्राह्मणम् । 'आधिदैविकं' देवताप्रकाशकम् । 'आध्यात्मिकं "अहं मनुरभवमहं रुद्र इत्यादि" [3]मन्त्रविशेषः वेदान्ते इत्यभिहितः ॥

यमः

दशद्वादशविंशाख्या चतुर्विंशतिमेव वा ।
प्राणायामानभ्यसेच्च लघ्वाहारो जितेन्द्रियः ॥
अहोरात्रेण विज्ञाना ज्जंतून्हिंस्याद्यदा मुनिः ।
प्राणायामान् दशाऽष्टौ वा प्रायश्चित्तं विधीयते ॥
चाक्षुषे दश कुर्वीत वाच्ये विंशतिमेव च ।
मानसे त्रिशतं कुर्याच्छतं वाऽपि यथाविधि ॥

1 अवाप्तवानिति मिताक्षरायां—३, ११०, सरस्वतीभवन मातृकायां च

2 ६, ८३—८४

3 बृहदारण्यकोपनिषदि, (१, ४, १०)
"तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति" । ब्रह्मसूत्रे, १, १, ३१—"शास्त्रदृष्ट्या तूपदेशो वामदेववत्"

[1]**मनुः**

अह्ना रात्र्या च यान्जन्तून् हिनस्त्यज्ञानतो यतिः ।
तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत् ॥
प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत्कृताः ।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥
दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥

[2]**तथा**

अवेक्षेत गतीर्नृणां कर्मदोषसमुद्भवाः ।
निरये चैव पतनं यातनाश्च यमक्षये ॥
विप्रयोगं प्रियैश्चैव संयोगं च तथाऽप्रियैः ।
जरया चाऽभिभवनं व्याधिभिश्चोपपीडनम् ॥
देहादुत्क्रमणं चाऽस्मात् पुनर्गर्भे च संभवम् ।
योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः ॥
अधर्मप्रभवं चैव दुःखयोगं शरीरिणाम् ।
धर्मार्थप्रभवंचैव सुखसंयोगमक्षयम् ॥
सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः ।
देहेषु च समुत्पत्तिमुत्तमेष्वधमेषु च ॥

**महाभारते**

आहारार्थं कर्मकुर्यात् । निन्द्यं कुर्यात् । आहारं प्राणसंधारणार्थम् प्राणाधार्यास्तत्वजिज्ञासार्थम् । तत्वं जिज्ञासं येन भूयान्नभूयः[3] ।

1 ६, ६९–७१
2 ६, ६१–६५
3 वी मि मोक्ष, ८५ adds—एव धर्मरतस्यैव सिद्धिरित्युक्तम्

[1]भूषितोपि चरेद्धर्मं यत्रतत्राश्रमे वसन् ।
समः सर्वेषु भूतेषु न लिंगं धर्मकारणम्[2] ॥
फलं कतकवृक्षस्य यद्यप्यम्बु प्रसादकम् ।
न नाम ग्रहणादेव तस्य वारि प्रसीदति ॥

तथा

अनेन क्रमयोगेन परिव्रजति यो द्विजः ।
स विधूयेह पाप्मानं परं ब्रह्माधिगच्छति ॥

[3]याज्ञवल्क्यः

न्यायार्जितधनस्तं तत्वज्ञाननिष्ठोऽतिथिप्रियः ।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि[4] मुच्यते ॥

महाभारते

कस्यैषा वाग्भवेत् सत्या मोक्षो नास्ति गृहादिति ।
अश्रद्धधानैरज्ञैः सूक्ष्मदर्शनवर्जितैः ॥
अलसैरर्वर्णैरल्पज्ञै स्तप्यमानैः स्वकर्मभिः ।
समस्योपरमोहष्टः प्रव्रज्यानामपण्डितैः ॥

'समस्य' सर्वस्य ।

[5]मनुः

एषधर्मोऽनुशिष्टो वै यतीनां नियतात्मनाम् ।
वेदसन्यासिकानां तु कर्मयोगं निबोधत ॥

1 Ascribed to *Manu* wrongly by वी मि मोक्ष , ८५
2 धर्मलक्षणम्—ना
3 १, २०५
4 विमुच्यते for हि मुच्यते इति अपरार्कपाठ
5 ६, ८६–९६

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रमनुष्ठिताः।
यथोक्तकारिणं विप्रं नयन्ति परमां गतिम् ॥
सर्वेषामपि चैतेषां वेदस्मृतिविधानतः।
गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्ति हि ॥
यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम्।
तथैवाऽऽश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥
चतुर्भिरपि चाऽप्येतैर्नित्यमाश्रमिभिर्द्विजैः।
दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥
दश लक्षणानि धर्मस्य ये विप्राः समधीयते।
अधीत्य चाऽनुवर्तन्ते ते यान्ति परमां गतिम् ॥
दशलक्षणकं धर्ममनुतिष्ठन् समाहितः।
वेदान्तान् विधिवच्छ्रुत्वा सन्यसेदनृणो द्विजः ॥
सन्यस्य सर्वकर्माणि कर्मदोषानपानुदन्।
नियतो वेदमभ्यस्यन् पुत्रैश्वर्ये सुखं वसेत् ॥
एवं सन्यस्य कर्माणि स्वकार्यपरमोऽस्पृहः।
सन्यासेनाऽपहत्यैनः प्राप्नोति परमां गतिम् ॥

इति श्रीभट्टहृदयधरात्मज श्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ
मोक्षकाण्डे यतिधर्मा ।

॥ ८ ॥

# अथ वैराग्यम्

तत्र महाभारते

वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः ।
ज्ञानादेव च वैराग्यं जायते येन मुच्यते ॥

'परमो विधिः,' परमं साधनम्। 'ज्ञानात्' संसारस्य दुःखमयत्वादिविज्ञानात् ।

अथ वैराग्यहेतवः। तत्र तापभेदाः। तत्र विष्णुपुराणे[1]।

आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः ।
[2]उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥

आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा ।

शारीरो बहुभिर्भेदैः भिद्यते श्रूयतां च सः ।
शिरोरोगप्रतिश्याय[3] ज्वरशूलभगन्दरैः ॥
[4]त्रिद् काशश्वाससफतुच्छर्द्यादिभिरनेकधा ।
तथाऽक्षिरोगातीसारकुष्ठाद्यामयसंज्ञितैः ॥

1 ६, ५, १—४२

2 उन्मत्तज्ञानवैराग्य —स

3 प्रतिश्याय=पीनस

4 गोरखपुर वि पु पृ ५१३, reads—
गुल्मार्श श्वयथुश्वासच्छर्द्यादिभिरनेकधा ।

भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि[1] ।
कामक्रोधभयद्वेषलोभमोहविषादजः ॥
शोकासूयावमानेर्ष्यामात्सर्यादिभवस्तथा ।
मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा ॥
इत्येवमादिभिर्दोषैः तापो ह्याध्यात्मिकः स्मृतः ।
मृगपक्षिमनुष्यैश्च पिशाचोरगराक्षसैः ॥
सरीसृपाद्यैश्च नृणां जन्यते चाधिभौतिकः ।
शीतोष्णवातवर्षाम्बुवैद्युतादिसमुद्भवः ॥
तापो द्विजवर श्रेष्ठैः कथ्यते चाऽऽधिदैविकः ।
गर्भजन्मजराज्ञानमृत्युनारकजं तथा ॥
दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम ।
सुकुमारतनुर्गर्भे जन्तुर्बहुमलावृते ॥
उल्बसंवेष्टितो भग्नपृष्ठग्रीवास्थिसंहतिः ।
अत्यम्लकटुतीक्ष्णोष्णलवणै [2]र्मातृभोजनैः ॥
अतितापिभिरत्यर्थं वर्धमानातिवेदनः ।
प्रसारणाकुञ्चनादौ नाऽङ्गानां प्रभुरात्मनः ॥
शकृन्मूत्रमहापङ्कशायी सर्वत्र पीडितः ।
निरुच्छ्वासः सचैतन्यः स्मरन्जन्मशतान्यथ ॥
आस्ते [3]गर्भेऽतिदुःखेन निजकर्मनिबन्धनः ।
जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः ॥
प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः ।
अधोमुखो वै क्रियते प्रबलैः सूतिमारुतैः ॥

1 इच्छसि इति उद मातृका
2 मातृभाजनै—उद मा
3 *vide* गर्भोपनिषत् and भागवत, ३, ३१

क्लेशान्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः ।
मूर्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना ॥
विज्ञानभ्रंशमाप्नोति जातश्च मुनिसत्तम ।
कण्टकैरिव तुन्नाङ्गः क्रकचैरिव दारितः ॥
पूतिव्रणान्निपतितो धरण्यां कृमिको यथा ।
कण्डूयनेऽपि चाऽशक्तः [1]परिवर्त्तेऽप्यनीश्वरः ॥
स्नानपानादिकाहारमप्याप्नोति परेच्छया ।
अशुचिप्रस्तरे सुप्तः कीटदंशादिभिः सदा ॥
भक्ष्यमाणोऽपि नैतेषां समर्थो विनिवारणे ।
जन्मदुःखान्यनेकानि जन्मनोऽनन्तराणि च ॥
बालभावे यदाप्नोति आधिभौतादिकानि च ।

'तापत्रयं' दुःखत्रयम् । 'उत्पन्नज्ञानवैराग्यः' उत्पन्ने ज्ञानवैराग्ये यस्य सः तथा । ज्ञानं चात्र ब्रह्मविषयकम् । 'आत्यन्तिको लयो' मोक्षः ।

तथा

अज्ञानतमसाऽऽच्छन्नो मूढान्तःकरणो नरः ।
न जानाति कुतः कोऽहं क्वाऽहं गन्ता किमात्मकः ॥
केन बन्धेन बद्धोऽहं कारणं किमकारणम् ।
किं कार्यं किमकार्यं वा किं वाच्यं किं च नोच्यते ॥
कोऽधर्मः कश्च वै धर्मः कस्मिन् वर्तेत वा कथम् ।
किं कर्तव्यमकर्तव्यं किं वा किं गुणदोषवत् ॥
एवं पशुसमैर्मूढैरज्ञानप्रभवं महत् ।
अवाप्यते नरैर्दुःखं शिश्नोदरपरायणैः ॥

1 कण्डूयेनेति च सक्त —स , ना

अज्ञानं तामसो भावः कार्यारम्भप्रवृत्तयः ।
अज्ञानिनां प्रवर्तन्ते कर्मलोभाश्च भो द्विज ॥
नरकं कर्मणां लोपे फलमाहुर्मनीषिणः ।
तस्मादज्ञानिनां दुःखमिह चाऽमुत्र चोत्तमम् ॥
जराजर्जरदेहश्च शिथिलावयवः [1]पुमान् ।
विगलच्छीर्णदशनो बलिस्नायुशिरावृतः ॥
दूरप्रणष्टनयनो व्योमान्तर्गततारकः ।
नासाविवरनिर्यातलोमपुञ्जश्चलद्वपुः ॥
प्रकटीकृतसर्वाङ्गो नतपृष्ठास्थिसंहतिः ।
प्रशान्तजठराग्नित्वादल्पाहारोऽल्पचेष्टितः ॥
कृच्छ्राच्चंक्रमणोत्थानशयनासनचेष्टितः ।
मन्दीभवच्छ्रोत्रनेत्रो गलल्लालाविलाननः ॥
अनायत्तैः समस्तैश्च करणैर्मरणोन्मुखः ।
तत्क्षणेऽप्यनुभूतानामस्मर्ताऽखिलवस्तुनाम् ।
सकृदुच्चारिते वाक्ये समुद्भूतमहाश्रमः ॥
श्वासकाशमहायाससमुद्भूतप्रजागरः ।
अन्येनोत्थाप्यतेऽन्येन तथा संवेश्यते जरी ॥
भृत्यात्मपुत्रदाराणामपमानपराकृतः[2] ।
प्रक्षीणाखिलशौचश्च विहाराहारसस्पृहः ॥
हास्यः परिजनस्याऽपि निर्विण्णाशेषबान्धवः ।
अनुभूतमिवाऽन्यस्मिन् जन्मन्यात्मविचेष्टितम् ॥
संस्मरन् यौवनेऽत्यर्थं निश्वसित्यतितापितः ।
एवमेतानि दुःखानि जरायामनुभूय वै ॥

1 क्रमात्—इति मुद्रित पाठ —वि पु कलकत्ता पृष्ठम् ८२९
2 आस्पदीकृत —मु वि पु, पृ ५१५

मरणे यानि दुःखानि प्राप्नोति शृणु तान्यपि ।
श्लथग्रीवांघ्रिपादोऽथ व्याप्तो वेपथुना नरः ॥
मुहुर्ग्लानीपरवशो मुहुर्ज्ञानलवान्वितः ।
हिरण्यधान्यतनयभार्याभृत्यगृहादिषु ॥
एते कथं भविष्यन्तीत्यतीव ममताकुलः ।
मर्मभिद्भिस्तथा रोगैः क्रकचैरिव दारुणैः ॥
शरैरिवाऽन्तकस्योग्रैश्छिद्यमानास्नुबन्धनः ।
विवर्तमानताराक्षिर्हस्तपादं मुहुः क्षिपन् ॥
संशुष्यमाणताल्वोष्ठपुटो घुरघुरायते ।
निरुद्धकण्ठो दोषौघैः उदानश्वासपीडितः ॥
तापेन महता व्याप्तः तृषा चाऽऽर्तस्तथा क्षुधा ।
क्लेशादुत्क्रान्तिमाप्नोति याम्यकिङ्करपीडितः ॥
ततश्च यातनादेहं क्लेशेन प्रतिपद्यते ।
एतान्यन्यानि चोग्राणि दुःखानि मरणे नृणाम् ॥

'कार्यारम्भप्रवृत्तयो' ऽत्र निषिद्धकाम्यगोचराः। 'कर्मलोपो' नित्यनैमित्तिकाकरणम् ।

देवलः

यद्दुःखं म्रियमाणस्य यद्दुःखं मातुराशये ।
नाऽन्यत्र ह्युपमा लोके जीवतामन्तरे तयोः ॥

विष्णुपुराणे

[1]गर्भवासादि यावत्तु पुनर्जन्मोपपादनम् ।
समस्तावस्थकं तावद्दुःखमेव हि देहिनाम् ॥

1 १, १७, ५९

क्षुत्तृष्णोपशमं तद्वच्छीताद्युपशमं सुखम् ।
मन्यते बालबुद्धित्वात् दुःखमेव हि तत्पुनः ॥
अत्यन्तस्तिमिताङ्गानां व्यायामेन सुखैषिणाम् ।
भ्रान्तिज्ञानावृताङ्गानां[1] प्रहारोऽपि सुखायते ॥

तथा

[2]अग्नेः शीतेन तोयस्य तृषा भक्तस्य च क्षुधा ।
क्रियते सुखकर्तृत्वं तद्धि लोपस्य चेतरैः ॥

तथा

[3]नरके यानि दुःखानि पापहेतूद्भवानि वै ।
प्राप्यन्ते नारकैर्विप्र तेषां संख्या न विद्यते ॥
न केवलं द्विजश्रेष्ठ नरके दुःखपद्धतिः ।
स्वर्गेऽपि तात भीतस्य क्षयिष्णोर्नास्ति निर्वृतिः ॥
पुनश्च गर्भे भवति जायते च पुनः पुनः ।
गर्भे विलीयते भूयो जायमानोऽस्तमेति च ॥
जातमात्रश्च म्रियते बालभावेऽथ यौवने ।
मध्यमं वा वयः प्राप्य वार्धके च ध्रुवा मृतिः ॥
यावज्जीवति तावच्च दुःखैर्नानाविधैः प्लुतः ।
तन्तुकारणपक्ष्मौघैरास्ते कार्पासबीजवत् ॥
द्रव्यनाशे तथोत्पत्तौ पालने च सदा नृणाम् ।
भवन्त्यनेकदुःखानि तथैवेष्टविपत्तिषु ॥
यद्यत्प्रीतिकरं पुंसां वस्तु मैत्रेय जायते ।
तदेव दुःखवृक्षस्य मूलत्वमुपगच्छति ॥

1 अक्षाणाम्—मुद्रि वि पु पाठ, कलकत्ता, पृष्ठम् १६७
2 १, १७, ६४
3 विष्णुपुराणे, ६, ५, ४९—६०

राजर्षयश्च बहवः सर्वैः समुदिता गुणैः ।
देवा ब्रह्मर्षयश्चैव कालेन निधनं गताः ॥
ये समर्था जगत्यस्मिन् सृष्टिसंहारकारणाः ।
तेऽपि कालेन हीयन्ते कालो हि [1]बलवत्तरः ॥

महाभारते

अविश्रान्तमनालम्बं अपाथेयमदैशिकम् ।
तमःकान्तारमध्वानं कथमेको गमिष्यसि ॥
यदा विसंज्ञः स्थिरनिश्चलेक्षणः
प्रयत्नहिक्कः श्वसनाद्यधिष्ठितः ।
तमो महान् श्वभ्रमिवोपनीयसे
तदा क्व दाराः क्व सुताः क्व बान्धवाः ॥
निराधिनोऽद्य ध्रुवजीवितस्य
किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय योगक्षति सर्वमेव
क्षणेन गत्वा न निवर्त्तते च ॥
किं ते धनैः किं तव बंधुभिर्वा
किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमिच्छंश्च गुहां प्रविष्टं
पितामहास्ते क्व गताः पिता च ॥
तुल्यजातिवयोरूपान् हृतान् पश्यसि मृत्युना ।
कथं ते नास्ति निर्वेदो लोहो हि हृदयं तव ।
मस्तकस्थापितं मृत्युं यदि पश्येदयं जनः ॥
आहारोऽपि न रोचेत किमुताऽकार्यकारिता ।
न ते पुत्रक निर्वेदो मुमूर्षोर्न भविष्यति ॥

1 दुरतिक्रम —मुद्रितपाठ

विमूढेन्द्रियवर्गस्य स तु नाऽर्थं करिष्यति ।
बहुकृत्यो निरुद्योगः जागर्तव्ये प्रतप्तकः ॥
विश्रंभकभयस्थाने हा पुत्रक विहन्यसे ।
मृत्योर्बिभेषि किं मृत्युर्न स भीतं विमुञ्चति ॥
अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ।
महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया ॥
पारं क्लेशोदधेर्गन्तुं त्वर यावन्न भिद्यते ।
एवमत्याहिते लोके कालेनोपनिपीडितैः ॥
सुमहद्धैर्यमास्थाय मनो मोक्षे निवेशयेत् ।

'अदैशिकं' मार्गोपदेशरहितम् । 'तमः कान्तारं' तमसा दुर्गम् । 'स्थिरनिश्चलेक्षणः' स्थिरो निश्चेष्टो निश्चलेक्षणश्चासौ स तथा । 'गुहां प्रविष्टं' दहरविद्योपदिष्टम्[1] ।

## अथ विषयनिन्दा

तत्र महाभारते

विषयाणां च दौरात्म्यादिन्द्रियाणां च चापलात् ।
मनसश्चाऽनवस्थानात्सर्वः कृच्छ्रेषु वर्त्तते ॥
विषयान प्रत्यनुसरन् प्राप्नोति सुमहद्भयम् ।
श्येनच्छायामनुपतन् कपिञ्जल इवाऽतपे ॥
जन्मान्तरशताभ्यस्ता विषयेषु रतिर्नृणाम् ।
जरद्गौरिव सस्येषु सा हि दुःखेन वार्यते ॥

1 *Cf* छान्दोग्योपनिषत्—८, १, १
अथ यदिदमस्मिन् ब्रह्मपुरे दहर पुण्डरीकं वेश्म । दहरोऽस्मिन्नन्तराकाश तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् । इत्यारभ्योक्तम् ॥

देवलः

भुक्तानि यानि तान्येव भोक्तव्यानि पुनर्नृभिः ।
इति दृष्टार्थतत्वस्य पुनरुक्तमिदं जगत् ॥

महाभारते

इषुप्रपातमात्रं हि स्पर्शयोगे रतिस्स्मृता ।
दर्शने रसने घ्राणे श्रवणे च विशेषतः ॥
ततोऽस्य जायते तीव्रा वेदना तत्क्षणात्मिका ।
कण्ठनालात्प्रलुठितं स्वाद्वस्वाद्वशनं समम् ॥
आस्वाद्यस्य हि सर्वस्य जिह्वाग्रे सन्धिविग्रहः ।
दिवसे दिवसे चैव रात्रौ रात्रौ तथा सदा ॥
भोक्तव्यमिति यत्तन्तो (?) दोषबुद्धिः स उच्यते ।
जिह्वोपस्थनिमित्तं हि पतनं सर्वदेहिनाम् ॥
अहेरिव गणाद्भीतो मिष्टान्नाच्च विषादिव ।
राक्षसीभ्य इव स्त्रीभ्यः स विद्यामभिगच्छति ॥

'इषुप्रपातमि'त्यल्पकालोपलक्षणम् ।

तथा

[1]मात्रास्पर्शास्तु कौंतेय शीतोष्णसुखदुःखदाः ।
आगमापायिनो नित्यास्तांस्तितिक्षस्व भारत ॥
यं हि न व्यथयंत्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥

'मात्रास्पर्शाः' विषयसम्बन्धाः ।

1 भगवद्गीतासु, २, १४–१५

दक्षः

विषयासक्तचित्तस्तु कश्चिन्मोक्षं न विन्दति ।
यत्नेन विषयासङ्गं तस्माद्योगी विवर्जयेत् ॥

मार्कण्डेयपुराणे

[1]हासोऽस्थिसन्दर्शनमक्षियुग्म
मत्युज्वलं तर्जनमङ्गनायाः ।
कुचादि पीनं पिशितं घनं तत्
स्थानं रतेः किं नरकं न योषित् ॥

महाभारते

यस्य जिह्वा सहस्रं स्याज्जीवेच्च शरदां शतम् ।
अनन्यकर्मा स्त्रीदोषाननुक्त्वा निधनं व्रजेत् ॥
अङ्गारसदृशी नारी घृतकुंभसमः पुमान् ।
ये ऽत्र सक्ता विलीनास्ते ये स्थितास्ते दिवं गताः ॥
न सुप्तेन जयेन्निद्रां न पानेन तृषां जयेत् ।
नेन्धनेन जयेदग्निं न कामेन स्त्रियं जयेत् ॥
यान्येव मलवाहीनि पूतिछिद्राणि योषिताम् ।
तान्येव खलु काम्यानि अहो पुंसां विडम्बना ॥
येषु येषु प्रदेशेषु कायोऽत्यन्तं जुगुप्सितः ।
तेषु सक्तरतो लोको वैराग्यं केन यास्यति ॥
स्त्री नाम मायाविकृतिः क्रोधमात्सर्यविग्रहम् ।
दूरात्त्यजेदनार्यां तां ज्वलनामेध्यवद्बुधः ॥

1 २५, १७ "तत्कलुष वयासा" (?) इति उदयपुर मातृकायाम्.

## अथाऽर्थनिन्दा

तत्र महाभारते

[1]अर्थानामार्जने दुःखमार्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थान् शोकवर्धनान् ॥
विमोहयन्ति संपत्सु तापयन्ति विपत्तिषु ।
खेदयन्त्यर्जने काले कदा भोगाः सुखावहाः ॥
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि ।
भक्ष्यते सलिले मत्स्यैः तथा सर्वत्र वित्तवान् ॥
राजतः सलिलादग्नेश्चौरतः स्वजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥

तथा

कार्पण्यदर्पमानौ च भयं वा भ्रममेव च ।
अर्थजान्विविदुः प्राज्ञा दोषानेतांस्तु देहिनः ॥
अर्थलोभेन पुरुषैर्वेषः स्त्रीभिरिव स्वयम् ।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥

तथा

संपदः प्रमदाश्चैव तरंगोत्संगभंगुराः ।
कस्तास्वहिफलच्छत्रछायास्विव रमेद्बुधः ॥
को हि नाम श्रियं वाञ्छेत् फुल्लां विषलतामिव ।
सविषस्येव पानस्य वश्यः सव्यसनो मदः ॥
नैषा गुणेषु रमते नैर्गुण्यान्न निवर्त्तते ।
उन्मत्ता गौरिवाऽन्धा श्रीः क्वचिदेवाऽवतिष्ठते ॥

1 आनु, २४४, १७

अचेष्टमानमासीनं श्रीः कञ्चिदुपतिष्ठते ।
कश्चित् कर्माणि कुर्वन्हि न प्राप्यमधिगच्छति ॥

तथा

सार्वभौमश्च यो राजा यात्रामात्रपरश्च यः ।
उपभोगस्तयोस्तुल्यः क्लेशाधमौ तु विस्तरौ ॥

अथ पुत्रदारादिनिन्दा

तत्र महाभारते

संचिनोत्यशुभं कर्म कलत्रापेक्षया नरः ।
एकः क्लेशानवाप्नोति परत्रेह च दुःखितः ॥
पुत्रदारकुटुम्बेषु मग्नाः सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्नाः शीर्णा वनगजा इव ॥
पुत्रनाशेऽर्थनाशे वा ज्ञातिसंबन्धिनामपि ।
प्राप्यते सुमहद्दुःखं दावाग्निप्रतिमं विभो ॥

तथा

माता पितृसहस्राणि पुत्रदारशतानि च ।
अनुभूतानि संसारे कस्य ते कस्य वा वयम् ॥
व्रजमानो यथाऽध्वानं छायामाश्रित्य विश्रमेत् ।
विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥
सहजेन विरज्यन्ते पत्ररागेण पादपाः ।
अन्येनाऽन्यस्य विश्लेषः कथन्तु न भविष्यति ॥
नायमत्यन्तसंवासः कस्यचित् केनचित्सह ।
अपि स्वेन शरीरेण किमुताऽन्यैः पृथग्जनैः ॥

संयोगा विप्रयोगास्तु जातानां प्राणिनां ध्रुवम् ।
बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च ॥
अलं परिग्रहेणेह दोषवांस्तु परिग्रहः ।
कृमिर्हि कोशकारस्तु बध्यते स्वपरिग्रहात् ॥
यावतः कुरुते बन्धुः सबन्धान्मनसः प्रियान् ।
तावतोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥
मानसं दुःखमूलं हि स्नेह इत्युपलक्ष्यते ।
स्नेहाद्विसृज्यते जन्तुः दुःखयोगमुपैति च ॥
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ।
शोकहर्षौ तथाऽऽयासः सर्वं स्नेहात् प्रवर्तते ॥

अथ स्वर्गदूषणम्

तत्र महाभारते

स्वर्गकामो यजेतेति श्रूयते सततं श्रुतिः ।
फलं प्रकल्प्याऽपूर्वं हि ततो यज्ञः प्रवर्तते ॥
अत्राऽपि च विशेषोऽस्ति दिवि नीचोच्चमध्यमः ।
न तत्राऽप्यस्ति सन्तोषो दृष्ट्वा दीप्तां परश्रियम् ॥
कृतस्य कर्मणः स्वर्गे भुज्यते कर्तृभिः फलम् ।
न चाऽन्यत् क्रियते कर्म मूलच्छेदेन भुज्यते ॥
सुखव्याप्तमनस्कानां सहस्ताभ्यागतापदाम् ।
संज्ञामोहश्च पततां रजसा च प्रधर्षणम् ॥
प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयम् ।
आब्रह्मभवनादेते दोषा ब्रह्मन् सुदारुणाः ॥
स्वर्गभाजः प्राप्नुवन्ति तस्मात् स्वर्गं न कामयेत् ।

सुहृज्ज्ञातिसजातीयैर्यथोरु-
　क्षीणे वित्ते त्यज्यते मानवो हि ।
तथा तस्मिन् क्षीणपुण्यं मनुष्यं
　त्यजन्ति सर्वे सेश्वरा देवसंघाः ॥

'रजसा च प्रधर्षणं' रजोगुणेनाऽभिभवः ।

मार्कण्डेयपुराणे

[1]स्वर्गेऽपि दुःखमतुलं यदारोहणकालतः ।
प्रभृत्यहं पतिष्यामित्येतन्मनसि वर्तते ॥
नरकांश्चापि संप्रेक्ष्य महद्दुःखमवाप्यते ।
एतां गतिमहं गन्तेत्यहर्निशमनिर्वृतः ॥

1 ११, २६.

॥ ९ ॥

# अथ कामादिवर्जनम्

तत्र महाभारते

[1]हृदि कामद्रुमश्चित्ते मोहसंचयसंभवः ।
क्रोधमानमहास्कन्धो विचिकित्सात्वगावृतः ॥
तस्य चाऽज्ञानमाधारः प्रमादः परिषेचनम् ।
अभ्यसूयापलाशो हि पूर्वदुष्कृतसारवान् ॥
संमोहस्कन्धविटपः शोकशाखाभयङ्करः ।
मोहिनीभिः पिपासाभिर्लताभिः परिवेष्टितः ॥
तस्याऽनुशयमूलस्य मूलमभ्युक्षरेद्बलात् ।
त्यागप्रसादतीक्ष्णेन सौम्येन परमासिना ॥

'सौम्येन' शान्तिकरेण ।

हारीतः

संकल्पात् कामः संभवति । आशयाच्च वर्द्धते स्नेहान्निबध्नाति स ह इच्छालक्षणो ऽनेकविधः कामो येनाऽभिभूतः । अतृप्त इव कामानां लोको ह्यनेन जन्मसंसारकामावर्ते निमज्जति । स एषोऽनलः कामः 'कामो हि भगवान् वैश्वानर' इति श्रुतिः । तस्याऽसंकल्पो नियमनम् ।

1 हृदिकामद्रमाद्भ्रो—स ना

महाभारते

सर्वोपायेन कामस्य क्रोधस्य च विनिग्रहः ।
कार्यः श्रेयोर्थिना नौ हि श्रेयोविघ्नार्थमुद्यतौ ॥
स्वादुकामुककामानां वैतृष्ण्यं किं न वाञ्छसि ।
मधु पश्यसि दुर्बुद्धे प्रपातं किं न पश्यसि ॥
यद्यत्यजति कामानां तत्सुखस्याऽभिपूर्यते ।
कामानुसारी पुरुषः काममनुविनश्यति ॥
यः कामानाप्नुयात् सर्वान् यश्चैतान् सकलान्त्यजेत् ।
प्रापणात् सर्वकामानां परित्यागो विशिष्यते ॥

मार्कण्डेयपुराणे

[1]कामः सर्वात्मना हेयो हातुं चेत् स न शक्यते ।
[2]मुमुक्षां प्रति कार्यः स स वै तस्याऽपि भेषजम् ॥

हारीतः

क्रोधाग्निनाभिभूतः, स्वेषामप्यबहुमतो, नाऽधिगमनीयोऽविश्वसनीयश्च भवति। कार्याकार्यवाच्यावाच्यानि न वितर्कयति। हितवादिनो गुरूनप्यतिक्रामत्यत्याविष्टः। प्रेतलोकायाऽऽत्मानं नयति। तत्र घोरां निरयप्रायां यातनामनुभूय क्रूरक्रव्यादासु तिर्यग्योनिषु जायते। तत्र सर्वासां प्रजानां वध्यो भवति। क्रमात् मनुष्यतां प्राप्य सर्वजनविद्विष्टतामुपैति। क्रोधो हि तमोरूपस्तस्य क्षमा नियमनम्।

1 ३७, २४
2 प्रतिकर्त्तव्य , स , प्रतिसस्कार्य —ना

विष्णुपुराणे

[1]मूढानामेव भवति क्रोधो ज्ञानवतां कुतः ।
हन्यते तात कः केन यतः सुकृतभुक् पुमान् ॥

महाभारते

न पंडितः क्रुध्यति नाऽभिषज्जते
न चाऽपि संसीदति न प्ररुष्यति ।
ना चाऽतिकृच्छ्रव्यसनेषु शोचति
स्थितः प्रकृत्या हिमवानिवाऽचलः ॥

श्रीरामायणे[2]

धन्यास्ते पुरुषव्याघ्र ये बुद्ध्या कोपमुत्थितम् ।
निरुन्धन्ति महात्मानो दीप्तमग्निमिवांऽभसा ॥

[3]महाभारते

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥

श्रीभगवानुवाच

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥
धूमेनाऽऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।
यथोल्बेनाऽऽवृतो गर्भस्तथा तेनेदमावृतम् ॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणाऽनलेन च ॥

1 १, १, १७
2 सुन्दरकाण्डे, ५५, ४
3 भगवद्गीता, ३, ३६—४१

इन्द्रियाणि मनो बुद्धिरस्याऽधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥

तथा [महाभारते]

एको लोभो महाग्राहो लोभात् पापं प्रजायते ।
ततः पापादधः प्राप्तिस्ततो दुःखं प्रपद्यते ॥
पापानां विध्यधिष्ठानं लोभमेकं नराधिप ।
लोभात्पापानि कुर्वन्ति सुविद्वांसोऽपि मानवाः ॥
क्रोधो लोभश्च निन्दा च पैशुन्यं मत्सरस्तथा ।
एवमेतानि राजेन्द्र लुब्धानामकृतात्मनाम् ॥
असन्तोषोऽसुखार्थैव लोभादिन्द्रियविभ्रमः ।
ततोऽस्य नश्यते प्रज्ञा विद्येवाऽभ्यासवर्जिता ॥

देवलः

अथातः पापदोषान् मनोवाक्यशरीरजान् व्याख्यास्यामः । तत्र मोहरागद्वेषमानलोभमदशोकममत्वाऽहंकारभयहर्ष [1]मोघवित्ताश्चेति द्वादश मानसाः ।

तेषां च त्रिविधो मोहसंभवः सर्वपाप्मनाम् ।
अज्ञानं संशयज्ञानं मिथ्याज्ञानमिति त्रिकम् ॥
विज्ञानं सर्वविद्यानामर्थानां स्वयमूहनम् ।
दोषैरधर्षणं चेति ज्ञानमज्ञानमन्यथा ॥
अश्रेयःश्रेयसोर्मध्ये भ्रमणं संशयो भवेत् ।
मिथ्याज्ञानमिति प्राहुरहिते हितदर्शनम् ॥

1 मोघचिन्ताश्च—स ना

भवत्यधर्मादज्ञानमविद्यातश्च संशयः ।
उभाभ्यामन्यथा ज्ञानं पापिष्ठमुपजायते ॥
अज्ञानाद्दुःखसंप्राप्तिः संशयाद्बध्यते पुनः ।
मिथ्याज्ञानात्पतत्येव मूढस्तामिस्रयोनिषु ॥
आवृत्ता विषयाः सर्वे दोषैर्दोषैर्यथा तनुः ।
गुणतो हृदि तान्कृत्वा रागो रागस्य लक्षणम् ॥
[1]स सन्निकर्षादज्ञानात् सङ्कल्पादभिमानतः ।
सुखाच्च जायते रागो विषयेषु शरीरिणाम् ॥
ज्ञानद्वेषादसामर्थ्यात् क्लेशादन्यप्रसंगतः ।
वियोगात् कालतः शोकात् धर्माच्च विनिवर्त्तते ॥
निवर्तते चेद्रागोऽयं पुंसो द्वेषादिहेतुभिः ।
भूयो ह्युत्पद्यते सङ्गात् ज्ञानान्नश्यति केवलम् ।
अतिप्रसक्तो भोगेषु रागो भवति दोषकृत् ॥
परस्त्रीषु परस्वेषु किञ्चित् प्रार्थनयाऽपि च ।
रोषोऽमर्षोऽभ्यसूया च द्रोहो मिथ्या वितर्कितम् ॥
दुःखार्हं श्चेति दोषज्ञैर्दोषः षोढाऽभिधीयते ।
य उष्मा हृदये जन्तोः समुत्तिष्ठति वैकृतः ॥
परानिष्टचिकीर्षायां स रोष इति संज्ञितः ।
पुराभावसमुत्थेन दोषेणैवाऽभिदेशितः ॥
किञ्चिद्दृष्टचैव यो द्वेषस्तदमर्षस्य लक्षणम् ।
परस्य दृष्ट्वा श्रुत्वा वा स्वगुणाभ्यधिकान्गुणान् ॥
नाऽभिनन्दति यो द्वेषात् साऽभ्यसूयेत्युदाहृता ।
सुहृदामपि यो नित्यमर्थानपि जिघांसति ॥

1 Lacuna from स सन्निकर्षात् to शोकाद्धर्मात् विनिवर्त्तते

असौहृदमतिः पापस्तदाहुर्द्रोहलक्षणम् ।
यः साधूनपदोषांश्च मन्यते दोषकारिणः ॥
मिथ्या वितर्कितं चेति तदाहुर्भावदोषजम्[1] ।
लोभाद्द्वेषाच्च सङ्कल्पः चिन्तनं पापकर्मणाम् ॥
दुःखार्हमिति विज्ञेयं पूर्वदुष्कृतसम्भवम् ।
दुःखाद्वृत्त्याभिघाताच्च दोषोऽयं षड्विधो भवेत् ॥
ज्ञानात् कालात्ययात् धर्मात् प्रीतेश्च विनिवर्त्तते ।

विष्णुपुराणे

[2]तापत्रयेणाऽभिहतं य एतदखिलं जगत् ।
तदाऽशोच्येषु भूतेषु द्वेषं प्राज्ञः करोति कः ॥
अथ भद्राणि भूतानि हीनशक्तिरहंपरम् ।
मुदं तथाऽपि कुर्वीत हानिर्द्वेषफलं यतः ॥
[3]सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ॥

देवलः

अतत्त्वग्रहणं तापो वेपथुर्ज्ञानसंप्लवः ।
स्वेदोऽक्षिरोगः पारुष्यं त्रासश्च द्वेषदोषजाः ॥
सर्वत्रोत्कृष्टमात्मानं सर्वेभ्यो यो निबध्यते ।
समान इति विज्ञेयो यथेष्टस्पष्टवाक्क्रियः ॥
परान्नं परभोगांश्च परसामर्थ्यमेव च ।
दृष्टा श्रुत्वा च या तृष्णा जायते लोभ एव च ॥

1 दोषकम्—ना and स
2 १, १७, ८०
3 १, १९, ३७

नास्ति तृष्णासमं दुःखं नास्ति त्यागसमं सुखम् ।
तस्मात्तु लोभसञ्जातां तृष्णां विद्वान् परित्यजेत् ॥
प्राप्यापि मेदिनीं कृत्स्नां तृष्णा नाऽस्य प्रशाम्यति ।
विवर्द्धते हि भूयोऽपि सा शिखेव विभावसोः ॥
दुःखादित्वात् दुरन्तत्वात् अधर्मत्वादतृप्तितः ।
पश्चाच्छोकावहत्वाच्च न क्वचिच्छ्रेयसी तृषा[1] ॥

वृद्धशातातपः

कस्तृणां शमयेद्धीभैर्दीर्घैरुत्तरलङ्घनम् ।
पुरो दीर्घां पदन्यासे छायां सायन्तनीमिव ॥

[2]विष्णुपुराणे

[3]मनोरथानां न समस्तिरस्ति
वर्षाशते नाप्यथवाब्दलक्षैः ।
पूर्णेषु पूर्णेषु पुनर्नवाना-
मुत्पत्तयः सन्ति मनोरथानाम् ॥
पद्भ्यां गता यौवनीनश्च जाता
दारैश्च संयोगमिता प्रसूता ।
दृष्टा सुतास्तत्तनयं प्रसूतिं
द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा ॥
द्रक्ष्यामि तेषामपि चेत्प्रसूतिं
मनोरथो मे भविता ततोऽन्यः ।
पूर्णेऽपि तत्राऽप्यपरस्य जन्मनः
निवार्यते केन मनोरथस्य च ॥

1 ईदृशा इति ना पाठ
2 Udaipur Ms omits the name
3 ४, २, ११६–११९

आमृत्युतो नैव मनोरथाना-
मन्तोऽस्ति विज्ञानमिदं ममाऽद्य ।
मनोरथासक्तिपरस्य चित्तं
न जायते वै परमार्थसंङ्गम् ॥
पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः ।
तथाऽप्यनुदिनं तृष्णा मम तेष्वेव जायते ॥
तस्मादेतानहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह ॥

महाभारते

तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी मता ।
अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥
आशा हि पुरुषं बाल लालापयति तस्थुषी ।
तस्माद्वैकल्यमासाद्य ध्रुवो मृत्युर्न संशयः ॥
आसन्नान् परतो भावान् दर्शयित्वा पदे पदे ।
छागो हरितमुख्येव दूरं नीतोऽस्मि तृष्णया ॥
यौवनं जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् ।
जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥
जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीर्यते जीर्यतः सर्वं तृष्णैका तु न जीर्यते ॥
यथा शृङ्गं गरोः काले वर्धमानस्य वर्द्धते ।
एवं हि तृष्णा वित्तेन वर्द्धमानेन वर्द्धते ॥
अकर्तव्येषु साध्वीवत् तृष्णा प्रेरयते नरम् ।
तमेव सर्वपापेभ्यो लज्जा मातेव रक्षति ॥
अकृतस्याऽऽगमो नास्ति कृते नाशो न विद्यते ।
अकस्मादेव लोकोऽयं तृष्णे दासीकृतस्त्वया ॥

तृष्णा खनिरगाधेयं दुष्पूरा केन पूर्यते ।
या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥

तथा

सुखं निराशः स्वपिति नैराश्यं परमं सुखम् ।
आशां निराशतः कृत्वा सुखं स्वपिति पिङ्गला ॥
सर्वत्र संपदस्तत्र सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥
अन्तो नास्ति पिपासायाः सन्तोषः परमं सुखम् ।
तस्मात् सन्तोषमेवेह धनमिच्छन्ति पण्डिताः ॥
यत् पृथिव्यां व्रीहियवं हिरण्यं पशवस्त्रियः ।
नाऽलमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥

'नालमेकस्ये'त्यलंशब्दः पर्याप्तौ ।

देवलः

कुलबुद्धिवपुर्विद्यावित्तैश्वर्यविभूतिभिः ।
स्वैरेतैर्बाधते योऽन्यं तन्मदस्येह लक्षणम् ॥
देवासुरमनुष्याणामुत्सिक्ता मदहेतवः ।
मदेनैव विनेशुस्ते तस्मात्त्याज्यो मदो बुधैः ॥
हर्षोत्सेकावलेपाश्च दंभो दर्पोऽथ गर्विता ।
अन्ये च ते द्विधा भावास्ते मदस्य विकल्पजाः ॥
अनिष्टयोगजात् द्वेषात् स्नेहादिष्टवियोगजात् ।
क्लेशाद्वा हृदि यद्दुःखं स शोक इति पठ्यते ॥
अनित्याः सर्वभावाश्चेच्छोकस्तत्र निरर्थकः ।
अथवा यदि नित्याःस्युः कुतः शोकः प्रवर्तते ॥

12

नैवं हि शोचेत्सत्त्वस्थस्तामसे वाऽपि केवलम् ।
शोकाद्दुःखमवाप्नोति समासेनेह रागतः ॥

'नैवं हि शोचे'दित्येवमुक्तप्रकारेण पर्य्यालोचयन्न दुःखमवाप्नोति इत्यर्थः ।

महाभारते

यदि मे पश्यतः कालो भूतानि न विदारयेत् ।
स्यान्मे हर्षश्च शोकश्च क्रोधश्चैव शचीपते ॥
भूतानां निधनं दिष्ट्या स्रोतसामिव सागरे ।
नैतत्सम्यग्विजानाति न वा मुह्यति वज्रधृक् ॥
नाहं कर्त्ता न कर्त्ता त्वं कर्ता यस्तु सदा प्रभुः ।
सोऽयं पचति मां कालो वृक्षे फलमिवाऽऽगतम् ॥
दग्धमेवाऽनुदहति हतमेवाऽनुहन्यते ।
नश्यते नष्टमेवाऽथ लब्धव्यं लभते नरः ॥
बुद्धिमन्तं कृतप्रज्ञं शुश्रूषुमनसूयकम् ।
दान्तं जितेन्द्रियं वाऽपि शोको न स्पृशते नरम् ॥
बुद्धिमन्तं च मूढं च शूरं भीरुं कविं जडम् ।
दुर्बलं बलवन्तं च भाव्यर्थो भजते नरम्[1] ॥

देवलः

इदं ममेति यत्स्वाम्यमात्मनोऽर्थेषु मन्यते ।
अजानंस्तदनित्यत्वं ममत्वमिति तद्विदुः ॥
अहमित्यभिमानेन यः क्रियासु प्रवर्तते ।
कार्यकारणयुक्तासु तदहंकारलक्षणम् ॥

1 भाव्यं नो भजते नरम्—ना and स

अहंकारममत्वाभ्यां बध्यन्ते सर्वदेहिनः।
संसारविनियोगेषु ताभ्यां मुक्तस्य मुच्यते ॥

मार्कण्डेयपुराणे

[1]यस्मिन् यस्मिन् ममत्वेन संवित् पुंसः प्रजायते।
ततस्ततः समादाय दुःखान्येव प्रयच्छति ॥
मार्जारभक्षिते दुःखं यादृशं गृहकुक्कुटे।
न तादृङ्ममताशून्ये कलविंकेऽथ मूषिके ॥

महाभारते

नाऽत्यक्त्वा सुखमाप्नोति नाऽत्यक्त्वा विन्दते पदम्।
नाऽत्यक्त्वा चाऽभयः शेते त्यक्त्वा सर्वं सुखी भव ॥
हतो देशः पुरं दग्धं प्रधानः कुंजरो हतः।
लोकसाधारणेष्वेषु मिथ्याज्ञानेन तप्यते ॥
प्रत्यूषपटहो राज्ञः सामान्यः सुखवासिभिः[2]।
ममेदमिति यो भावस्तस्य स प्रीतिकारकः ॥
अपि च भवति मैथिलेन गीतं
नगरमुपाहितमग्निनाऽभिवीक्ष्य।
मम न खलु तुषोऽपि दह्यतेऽस्मिन्
स्वयमिदमाह किल स्म भूमिपालः ॥
अनन्तं बत मे वित्तं पश्य मे नास्ति किंचन।
मिथिलायां प्रदीप्तायां न मे किंचन दह्यते ॥

1 ३८, ३
2 पुरवासिभि ना and स

**यङ्किरुवाच**

आत्माऽपि चाऽयं न मम सर्वा वा पृथिवी मम ।
यथा मम तथाऽन्येषामिति मत्वा न मे व्यथा ॥
एष ब्रह्म प्रविष्टोऽहं ग्रीष्मे शीतमिव [1]ह्रदम् ।
शाम्यामि परिनिर्वामि सुखमासे च केवलम् ॥
धेनुर्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च ।
पयः पिबति यस्तस्या धेनुस्तस्येति निश्चयः ॥

**देवलः**

अहं ममेति चाऽऽत्मानं संसारे परिवर्तते ।
नाऽहं कश्चिन्न मे कश्चिदिति पश्यन्न बध्यते ॥

**विष्णुपुराणे**

[2]अहं ममेत्यविद्येयं व्यवहारस्तथाऽनघ ।
परमार्थस्त्वसंलाप्यो गोचरे वचसां न सः ॥

**तथा**

[3]अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ।
अविद्यातरुसंभूति बीजमेतत् द्विधा स्थितम् ॥
पञ्चभूतात्मके देहे देही मोहतमोवृतः ।
अहमेतदितीत्युच्चैः कुरुते कुमतिर्मतिम् ॥
आकाशवाय्वग्निजलपृथिवीभ्यः पृथक् स्थिते ।
आत्मन्यात्ममयं भावं कः करोति कलेबरे ॥

1 ह्रदम्, which is the *Sruti* expression—स ना, but Udaipur Ms has गृहम् in place of ह्रदम्

2 ६, ८, १०

3 ६, ७, ११

कलेबरोऽप्यभोग्यं हि गृहक्षेत्रादिकं च कः ।
अदेहेऽनात्मनि प्राज्ञो ममेदमिति मंस्यते ॥
इत्थं च पुत्रपौत्रादौ तद्देहोत्थापिते तु कः ।
करोति पण्डितः स्वाम्यमनात्मनि कलेबरे ॥
सर्वं देहोपभोगाय कुरुते कर्म मानवः ।
देहं चाऽन्यद्यदा पुंसः तदा बन्धाय तत्परम् ॥
मृण्मयं हि यथा गेहं लिप्यते वै मृदंभसा ।
पार्थिवोऽयं तथा देहो मृदं भोलेपनं स्थितिः ॥
पञ्चभूतात्मकैर्भोगैः पञ्चभूतात्मकं वपुः ।
अथाऽऽप्यते यदि ततः पुंसो गर्वोऽत्र किंकृतः ॥

देवलः

आत्मबाधाकरं श्रुत्वा दृष्ट्वा वा प्रत्युपस्थितम् ।
उद्वेगो जायते यस्तु हृदये तद्भयं स्मृतम् ॥
तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥
भवितव्यं भवत्येव नास्ति कर्मव्यतिकृतिः ।
इत्येवं दृष्टतत्वानां न क्वचिज्जायते भयम् ॥
आत्मनोऽभ्युदयं दृष्ट्वा परस्य व्यसनानि वा ।
आनन्दो मानसो जातो हर्ष इत्यभिधीयते ॥
सर्वद्रव्येष्वतीतेषु क्षणिकेषु धनेषु च ।
न हर्षस्याऽवकाशोऽस्ति विमृश्य यदि पश्यसि ॥
माध्यस्थ्यमपि दोषाय परेषां व्यसनागमे ।
किं पुनर्मूढभावेन प्रमोदः परविद्रवे ॥
यो वृथा चिन्तयेदर्थान् मनसा ह्यपरस्परान् ।
मोघचिन्तेति तामाहुर्द्धर्मकर्मोपघातिनीम् ॥

[1]भोगैश्वर्यमदादीनि लोभाद्यः संस्मरेद्वृथा ।
स मोघचिन्तयाऽऽत्मानं हन्ति बुद्धिं च कर्म च ॥
तस्मात् विदूरगां चिन्तां त्यक्त्वा शोकं च कर्मजम् ।
आरभेत शिवं कर्म ध्रुवं प्राप्तुं च सर्वशः ॥
रागसङ्कल्पजान् ग्रन्थीन् हृदयेषु दृढार्पितान् ।
उच्छिद्येत्तांस्तु मेधावी तत्वज्ञानासिनाऽद्भुतम् ।
आत्मदोषक्षयोपायमनित्यामेध्यतां तनोः ॥
हितं च सर्वभूतानां चिन्तयेन्मनसाऽसकृत् ।
एते मनोभवा दोषा द्वादशाऽशिवहेतवः ॥
मोहादयः समाख्याता देवासुरविमोहनाः ।
तत्संयोगान्मनो गुप्ते ज्ञानधर्मप्रसङ्गतः ॥
त्यागाच्च व्यसनादीनां हानिर्गच्छति मानसम् ।
अप्रकाशकरो बुद्धिं तमसाऽऽवृत्य सर्वशः ॥
प्रथमं जायते मोहो देहिनां हृदि पाप्मजः ।
मोहादुत्पद्यते रागो रागाद्वेषः प्रवर्तते ॥
त्रिभिरेतैर्भवत्येव पापं शारीरवाङ्मयम् ।
[2]तस्मान्हरीह सर्वेषु मानसे स्वपिति स्वयम् ॥
सर्वान् दोषान् परित्यक्तुं त्रीनेतान् प्रथमं त्यजेत् ।
'अपरस्परान्' सातत्येनाऽपरापरान् ।

[3]**महाभारते**

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥

1 भोगैश्वर्यवनादीनि—स and ना

2 ना and स read तस्मात् वरीयस्सर्वेषु मानसेष्वपि तत् त्रयम्

3 भगवद्गीता, २, ६२–६३

क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिनाशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥

तथा

एकः शत्रुर्न द्वितीयोऽस्ति कश्चित्
अज्ञानतुल्यः पुरुषस्य राजन् ।
येनाऽऽवृतः कुरुते संप्रमत्तो
घोराणि कर्माणि सुदारुणानि ॥
रागो द्वेषः काममोहौ पापानां चैव या क्रिया ।
विचिकित्सा क्रोधमोहौ दंभोऽसूया मदस्तथा ॥
ईर्ष्या हिंसा च मात्सर्यं कुत्सा तंद्रा तथैव च ।
अज्ञानमेतन्निर्दिष्टं तृष्णा मोहोपसेवनम् ॥
क्षमया क्रोधमुच्छिन्द्यात् कामं सङ्कल्पवर्जनात् ।
सत्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति ॥
अप्रमादाद्भयं भक्षेच्छ्वासं क्षेत्रज्ञसेवनात् ।
ईर्ष्या द्वेषं च कामं च धैर्येण विनिवर्तयेत् ॥
भ्रमं प्रमोहमावर्त्तमभ्यासाद्विनिवर्त्तयेत् ।
निद्रां च प्रतिमां चैव ज्ञानाभ्यासेन तत्ववित् ॥
उपद्रवांस्तथा रोगान् हितजीर्णमिताशनात् ।
लोभं मोहं च सन्तोषाद्विषयं तत्वदर्शनात् ॥
अनुक्रोशादधर्मं च जयेद्धर्ममुपेक्षया ।
आयत्या च जयेदाशां दम्भं सङ्गविवर्जनात् ॥
अनित्यत्वेन च स्नेहं क्षुधं योगेन पण्डितः ।
कारुण्येनाऽऽत्मनो मानं तृष्णां च परितोषतः ॥
उत्थाय च जयेत्तन्द्रां वितर्कं निश्चयाज्जयेत् ।
मौनेन बहुभाष्यं च शौर्येण च भयं त्यजेत् ॥

द्रव्येषु समतीतेषु ये गुणास्तान्न चिन्तयेत् ।
ताननाद्रियमाणस्तु स्नेहबन्धाद्विमुच्यते ॥
दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्तते ।
अनिष्टवर्द्धितं पश्येद्यथा क्षिप्रं विवर्धते ॥
दुःखोपघाते शारीरे मानसे वाऽप्युपस्थिताः ।
यस्मिन्न शक्यते कर्तुं यत्नतस्तान्विचिन्तयेत् ॥
भैषज्यमेतद्दुःखस्य यदेतन्नाऽनुचिन्तयेत् ।
चिन्तमानं हि नश्येति(?) भूयश्चाऽपि प्रवर्त्तते ॥
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं निर्बलैः समतामियात् ॥

तथा

यमर्थसिद्धिः परमा न हर्षये-
त्तथैव काले व्यसनं न मोहयेत् ।
सुखं च दुःखं च तथैव मध्यमं
निषेवते यः स धुरंधरो नरः ॥
यां यामवस्थां पुरुषोऽधिगच्छेत्
तस्यां च मेधापरितप्यमानः ।
एवं प्रवृद्धे प्रणुदेन्मनोजं
सन्तापमायासकरं शरीरे ॥
धृत्वा शिश्नोदरं वक्षे पाणिपादं च चक्षुषा ।
चक्षुःश्रोत्रेषु मनसा मनो वाचं च विद्यया ॥
निद्रा सर्वात्मना त्याज्या स्वप्नदोषानवेक्षता ।
स्वप्ने हि रजसा देही तमसा चाऽभिभूयते ॥

## ॥ १० ॥

# अथेन्द्रियजयः

**मनुः**[1]

इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम् ॥
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयः ।
सन्नियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाऽभिवर्द्धते ॥
न तथैतानि शक्यन्ते सन्नियन्तुमसेवया ।
विषयेषु प्रदुष्टानि यथा ज्ञानेन नित्यशः ॥
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥
इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनाऽस्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥

'कामो'भिलाषः । 'कामानां' काम्यानां 'विषयाणां' शब्दादीनाम् । 'दृति'र्भस्त्रा[2] ।

1 २, ८८, ९३, ९४, ९६, ९८, ९९

2 दृति 'चर्मनिमित उदकपात्रम्' इति कुल्लूक ।

**महाभारते**

न खल्वप्प्यरसज्ञस्य कामः क्वचन जायते ।
श्रवणाद्दर्शनाद्वाऽपि स्पर्शनाद्वाऽपि जायते ॥
न त्वं स्मरसि वारुण्या लावकाणां च पक्षिणाम् ।
ताभ्यां चाऽप्यधिको भक्ष्यो न कश्चिदिह विद्यते ॥

'अरसज्ञस्य' तज्जन्यसुखानभिज्ञस्य । [च]

**तथा**[1]

[2]विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥
यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥
तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥
रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥

1 भगवद्गीता, २, ५९–६१, ६३–६५

2 "इन्द्रियाणा आहारा विषया, निराहारस्य विषयेभ्य प्रत्याहृतेन्द्रियस्य देहिनो विषया विनिवर्तमाना रसवर्जम् विनिवर्तन्ते, रसो राग, विषयरागो न निवर्तत इत्यर्थ । रागोऽप्यात्मस्वरूप विषयेभ्य परं सुखतर दृष्ट्वा निवर्तते ॥" (**श्री रामानुजभाष्यम्**)

"यद्यपि विषया विषयोपलक्षितानि विषयशब्दवाच्यानि इन्द्रियाणि निराहारस्य अनाह्रियमाणविषयस्य, काष्ठतपसि स्थितस्य मूर्खस्यापि विनिवर्तन्ते देहिन देहवत रसवर्जम् रसो रागो विषयेषु य त वर्जयित्वा । रसशब्दो रागे प्रसिद्ध 'स्वरसेन प्रवृत्त, रसिक रसज्ञ' इत्यादिदर्शनात् । सोऽपि रसो रञ्जनारूप सूक्ष्म अस्य यते पर परमार्थतत्व ब्रह्म दृष्ट्वा उपलभ्य 'अहमेव तत्' इति वर्तमानस्य निवर्तते निर्बीजं विषयविज्ञान सपद्यते इत्यर्थ" (**श्री शाङ्करभाष्यम्**)

इन्द्रियाणां विचरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाऽम्भसि ॥

'रसवर्जमि'त्यत्र रसो राग इति गीताभाष्यम्[1] । 'परं दृष्ट्वा' परमात्मानं साक्षादवगम्य ।

[2]विष्णुपुराणे

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धस्य[3] व्यसनासङ्गि मुक्तो निर्विषयात्मनः ॥

[4]महाभारते

उद्धरेदात्मनाऽऽत्मानं नाऽऽत्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥
बन्धुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवाऽऽत्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्त्तेताऽऽत्मैव शत्रुवत् ॥
जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥

1 This comment appears to show that Laksmidhara was conversant with the bhāsyas of both S'ankara and Rāmānuja, and that he leaned in his views to the latter since he explains पर दृष्ट्वा as परमात्मान साक्षादवगम्य, an interpretation opposed to *Advaita*

2 ६, ७, २८

3 विषयासङ्गि—स

4 भगवद्गीता, ६, ५—७

॥ ११ ॥

# अथ तत्वसृष्टिः

तत्र देवलः

तत्र सांख्यानामेका मूलप्रकृतिः। सप्त प्रकृतिविकृतयः। [1]महदहंकारौ। पञ्च तन्मात्राणि। षोडश विकाराः। [2]पञ्चेन्द्रियाणि। अर्थाश्च पञ्चभूतविशेषाश्च त्रयोदश करणानि। तेषां त्रीण्यन्तःकरणानि। दश बहिःकरणानि।

'पञ्च पञ्चेन्द्रियाणि' पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि इत्येवं दश।

'अर्था' रूपादयः। 'भूतविशेषाः' पृथिव्यादयः।

तथा

अथ मूलप्रकृतिरव्यक्तं महानहंकारः। पञ्च तन्मात्राणीति प्रकृतिविकृतयः। शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, [3]गन्धतन्मात्रमिति। तन्मात्राणि द्विविधानि। इन्द्रियाणि मनो भूतविशेषाश्च विकाराः। चक्षुःश्रोत्रघ्राणजिह्वात्वचो बुद्धीन्द्रियणि। रूपरसगन्धस्पर्शास्तेषामर्थाः। वाक्, पाणि, पाद, पायूपस्थाः कर्मेन्द्रियाणि।

1 Omitted in Nagpur Ms and Sarasvatibhavan Ms

2 पञ्चपञ्चेन्द्रियाणि—स and ना

3 Omitted in Sarasvatibhavan Ms

भाषणं क्रिया गमनमुत्सर्गः प्रीतिरिति कर्मेन्द्रियार्थाः। वाय्वग्न्यम्ब्वाकाशपृथिव्यो भूतविशेषाः। दशेन्द्रियाणि बुद्ध्यहंकारमनांसि च करणानि। तेषां मनोबुद्ध्यहंकाराश्चाऽन्तःकरणानि दश बहिःकरणानि। इन्द्रियाणि च।

गुणसाम्यलक्षणमव्यक्तम् प्रधानं प्रकृतिः विधानमित्यनर्थान्तरम्। अध्यवसायलक्षणो महान् [1]बुद्धिर्मतिरुपलब्धिरित्यनर्थान्तरम्। अभिमानलक्षणोऽहंकारो वैकारिकोऽहंकारोऽभिमान इत्यनर्थान्तरम्। सत्तामात्रलक्षणानि तन्मात्राणि स्वानुग्रहलक्षणानीन्द्रियाण्यक्षाणीन्द्रियाण्युच्यन्ते। संकल्पलक्षणं मनः। इन्द्रियार्थलक्षणा विषयविशेषा भूतानीत्यनर्थान्तरमिति।

सर्वपूर्विका प्रकृतिः। प्रकृतेर्महानुत्पद्यते। महतोऽहंकारः। अहंकारात्तन्मात्राणि इद्रियाणि च। तन्मात्रेभ्यो विशेषा इत्युत्पत्तिक्रमः।

'गुणसाम्यलक्षणं' सत्वरजस्तमसां साम्यमविकृतित्वम्। तदेव लक्षणं यस्य तत्तथा।

'सर्वपूर्विका' सर्वेभ्यः प्रथमा।

<u>यमः</u>

मनो बुद्धिरहंकारः खानिलाग्निजलानि भूः।
एताः प्रकृतयस्त्वष्टौ विकाराः षोडशाऽपरे॥
श्रोत्राक्षिरसनघ्राणत्वचः सङ्कल्प एव च।
शब्दरूपरसस्पर्शगन्धवाक्पाणिपायवः॥

1 स omits मतिरुपलब्धि

पादावुपस्थ इति ते विकाराः षोडशाऽपरे ।
चतुर्विंशकमित्येतत् ज्ञानमाहुर्मनीषिणः ॥
पञ्चविंशकमव्यक्तं षड्विंशः पुरुषोत्तमः ।
[1]एतज्ज्ञात्वा सुमुच्यन्ते यतयः शान्तबुद्धयः ॥
पञ्चविंशतितत्त्वज्ञो याति विष्णोः परं पदम् ।

याज्ञवल्क्यः[2]

बुद्धेरुत्पत्तिरव्यक्ता ततोऽहङ्कारसंभवः ।
तन्मात्रादीन्यहङ्कारादेकोत्तरगुणानि तु ॥
शब्दस्स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ।
यो यस्मान्निःसृतश्चैषां स तस्मिन्नेव लीयते ॥

'एकोत्तरगुणानि' एकैकेन गुणेन उत्तरोत्तरमधिकानि आकाशादीनि भूतानि ।

विष्णुपुराणे[3]

अव्यक्तं कारणं यत्तत् प्रधानमृषिसत्तमैः ।
प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम् ॥
[4]अव्यक्तं नाऽन्यदाधारममरमजरं ध्रुवम् ।
शब्दस्पर्शविहीनं तद्रूपादिभिरसंहतम्[5] ॥
त्रिगुणं तज्जगद्योनिरनादिप्रभवाऽव्ययम् ।
तेनाऽग्रे सर्वमेवाऽऽसीद्व्याप्तं वै प्रलयादनु ॥

1 एतज्ज्ञात्वाऽऽशु मुच्यन्ते—ना and स

2 ३, १७९, 'गुणानि च' इति **विज्ञानेश्वर**पाठ , व्याख्यात च—"च शब्दात्तैकारिकतैजसाभ्या बुद्धिकर्मेन्द्रियाणा उत्पत्ति " इति

3 १, २, १९—२३, २५–६२

4 'अक्षय' इति मुद्रित (गोरखपुर) पुस्तके (पु ७)

5 'असहित' इति मु पु

वेदवादविदो विद्वन् नियता ब्रह्मवादिनः ।
पठन्ति चैतमेवार्थं प्रधानप्रतिपादकम् ॥
नाऽह्नो न रात्रिर्न नभो न भूमि-
र्नासीत्तमो ज्योतिरभून्न चान्यत् ।
श्रोत्रादिबुध्याद्युपलभ्यमेकं[1]
प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥
प्रकृतौ संस्थितं व्यक्तमतीतः प्रलये तु यत् ।
तस्मात्प्राकृतसंज्ञोऽयमुच्यते प्रतिसञ्चरः ॥
अनादिर्भगवान् कालो नाऽन्तोस्य[2] द्विज विद्यते ।
अत्युच्छिन्नास्ततस्त्वेते स्वर्ग[3] स्थित्यन्तसंयमाः ॥
गुणसाम्ये ततस्तस्मिन् पृथक् पुंसि व्यवस्थिते ।
कालस्वरूपरूपं तत् विष्णोः मैत्रेय वर्त्तते ।
ततस्तु तत् परं ब्रह्म परमात्मा जगन्मयः ॥
सर्वगः सर्वभूतेशः सर्वात्मा परमेश्वरः ।
प्रधानं पुरुषं [4]चाऽपि प्रविश्य स्वेच्छया हरिः ॥
क्षोभयामास संप्राप्तेः सर्गकाले व्ययाव्ययौ ।
यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते ॥
मनसो नोपकर्तृत्वात्तथाऽसौ परमेश्वरः ।
स एव क्षोभको ब्रह्मन् क्षोभ्यश्च पुरुषो मतः[5] ॥
स सङ्कोचविकासाभ्यां प्रधानत्वेऽपि संस्थितः ।
[6]विकाराश्च स्वरूपैश्च ब्रह्मरूपादिभिस्तथा ॥

1 बुद्ध्याद्युनुलभ्यमिति—मु पु
2 नाऽतो for नान्तो in स
3 सर्गास्थित्यन्तसम्यमा इति मु पु
4 पुरुषौ चापि इति मु पु
5 पुरुषोत्तम इति मु पु
6 विकासाणुस्वरूपैश्च इति मु पु

व्यक्तस्वरूपश्च तथा विष्णुः सर्वेश्वरेश्वरः ।
गुणसाम्यात्ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान् मुने ॥
गुणव्यञ्जनसंभूतिः सर्गकाले द्विजोत्तम ।
प्रधानतत्त्वमुद्भूतं महान्तं तत्समावृणोत् ॥
सात्विको राजसश्चैव तामसश्च त्रिधा महान् ।
प्रधानतत्त्वेन समं त्वचा बीजमिवाऽऽवृतम् ॥
वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ।
त्रिविधोऽयमहंकारो महत्तत्वादजायत ॥
भूतेन्द्रियाणां हेतुः स त्रिगुणत्वान्महामुने ।
यथा प्रधानेन महान् महता स तथाऽऽवृतः ॥
भूतादिस्तु विकुर्वाणः [1]संगतात्मा त्रिकं ततः ।
ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् ॥
शब्दमात्रमथाकाशं भूतादिः समावृणोत् ।
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह ॥
बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः ।
आकाशं शब्दतन्मात्रं स्पर्शमात्रं समावृणोत्[2] ॥
ततो वायुर्विकारेण रूपमात्रं ससर्ज ह ।
ज्योतिरुत्पद्यते वायुस्तद्रूपगुणमुच्यते ॥
स्पर्शमात्रस्ततो वायूरूपमात्रं समावृणोत् ।
ज्योतिश्चाऽपि विकुर्वाणं रसमात्रं ससर्ज ह ॥
संभवन्ति ततोऽम्भांसि रसाधाराणि तानि तु ।
रसमात्राणि चाऽम्भांसि रूपमात्रं समावृणोत् ॥
विप्रकुर्वाणि चाम्भांसि गन्धमात्रं ससर्जिरे ।
संघातो जायते यस्मात् तस्य गन्धो गुणो मतः ॥

1 शब्दतन्मात्रकमिति मु पु
2 Line missing in Udaipur Ms

तस्मिंस्तस्मिंस्तु तन्मात्रात्तेन तन्मात्रता स्मृता।
तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ॥
न शान्ता नाऽपि घोरास्ते न मूढा न विशेषिणः।
भूततन्मात्रसंज्ञोऽयं[1] अहंकारात्तु तामसात् ॥
तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश।
एकादशं मनश्चाऽत्र देवा वैकारिकास्तथा[2] ॥
त्वक् चक्षुर्नासिका जिह्वा श्रोत्रमत्र तु पञ्चमम्।
शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वै द्विजः ॥
पायूपस्थौ करौ पादौ वाक् च मैत्रेय पञ्चमी।
विसर्गशिल्पगत्युक्ति कर्म तेषां प्रचक्षते[3] ॥
आकाशवायुतेजांसि सलिलं पृथिवी तथा।
शब्दादिभिर्गुणैर्ब्रह्मन् संयुक्तान्युत्तरोत्तरैः ॥
शान्ता मूढाश्च घोराश्च विशेषास्तेन ते स्मृताः।
नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ॥
नाऽशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः।
समेत्याऽन्योन्यसंयोगं परस्परसमाश्रयाः ॥
एकसंघातलक्ष्याश्च संप्राप्यैक्यमशेषतः।
पुरुषाधिष्ठितत्वाच्च अव्यक्ताऽनुग्रहेण च ॥
महदाद्या विशेषान्ताः ह्यण्डमुत्पादयन्ति ते।
[4]उत्क्रमेण विरुद्धं च जलबुद्बुदवत्समम् ॥
भूतेभ्योऽण्डं महाबुद्धे बृहत्तदुदकेशयम्।
प्राकृतं ब्रह्मरूपस्य विष्णोः स्थानमनुत्तमम् ॥

1 In the three Mss सर्गोऽयम् इति मु पु
2 स्मृता for तथा in मु पु
3 च कथ्यते इति मु पु
4 तत्क्रमेण इति मु पु

तत्राऽव्यक्तस्वरूपोऽसौ व्यक्तरूपी जगत्पतिः ।
विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः ॥
मेरुरुल्बमभूत्तस्य जरायुश्च महीधराः ।
गर्भोदकं सुमुद्राश्च तस्याऽऽसन् सप्त चात्मनः ॥
[1]अद्रिद्वीपसमुद्राश्च सञ्ज्योतिर्लोकसंग्रहः ।
तस्मिन्नण्डेऽभवद्विप्र सदेवासुरमानवः ॥
वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः ।
वृतैर्दशगुणैरण्डे भूतादि [2]महता तथा ॥
अव्यक्तेनाऽऽवृतो ब्रह्मन् तैः सर्वैः संहितो महान् ।
एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ॥
नारिकेलफलस्याऽन्तर्बीजं बाह्यदलैरिव ।
जुषन्रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः ॥
ब्रह्मा भूत्वा स जगतो विसृष्टौ संप्रवर्तते ।
सृष्टं च पात्यनुयुगं यावत् कालविकल्पना ॥
सत्वभुग् भगवान् विष्णुरप्रमेयपराक्रमः ।
[3]सर्गस्थित्यन्तकरणाद्ब्रह्मविष्णुशिवात्मिकाम् ।
स्वसंज्ञां याति भगवान् एक एव जनार्दनः ॥
स्रष्टा सृजति चाऽऽत्मानं विष्णुः पाल्यं च पाति च ।
उपसंहरते चाऽन्ते संहर्ता च स्वयं प्रभुः ॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत् ॥

1 साद्रिद्वीप इति मु पु

2 भूतानि for भूतादि—स

3 १, २, ६६-७०, मु पु पाठ सृष्टिस्थित्यन्त इति

स एव सर्वभूतेशो[1] विश्वरूपो यतोऽव्ययः ।
[2]सर्गादिकं तु तस्यैव भूतस्थमुपकारकम् ॥
स एव सृज्यः स च सर्गकर्त्ता
स एव पालयति च पाल्यते च ।
ब्रह्माद्यवस्थाभिरशेषमूर्ति-
र्विष्णुर्वरिष्ठो वरदो वरेण्यः ॥

[तथा[3]]

[4]महदादेर्विकारस्य विशेषान्तस्य संक्षये ।
कृष्णेच्छाकारिते तस्मिन् प्रवृत्ते प्रतिसञ्चरे ॥
आपो ग्रसन्ते वै पूर्वं भूमेर्गन्धात्मकं गुणम् ।
आत्तगन्धा ततो भूमिः प्रलयत्वाय कल्पते ॥
प्रनष्टे गन्धतन्मात्रैर्भवत्युर्वी जलात्मिका[5] ।
अपामपि गुणो यस्तु ज्योतिषा लीयते तु सः ॥

तथा

ज्योतिर्वायौ लयं याति यात्याकाशे समीरणः ।
आकाशं चैव भूतादि ग्रसते तं तथा महान् ॥
महान्तमेभिः सहितं प्रकृतिर्ग्रसते द्विज ।
गुणसाम्यसमुद्रिक्तमन्यूनं च महामुने ॥

1 भूतात्मा इति मु पु
2 सञ्ज्ञादिकम् इति स मातृकायाम् (fol ३५)
3 There should be तथा here to indicate a break in the quotation The verses which follow are from the sixth ams'a, chapter 4, s'l 13 ff
4 ६, ४, १३–१५, १७, ३२–४०
5 These three lines are omitted in the Ms

आपस्तदा प्रवृद्धास्तु वेगवत्यो महास्वना ।
सर्वमापूरयन्तीद तिष्ठन्ति विचरन्ति च ॥
सलिलेनोर्मिमालेन लोका व्याप्ता समन्तत ।

प्रोच्यते प्रकृतिर्हेतुः प्रधानं कारणं परम् ।
इत्येषा प्रकृतिः सर्वा व्यक्ताव्यक्तस्वरूपिणी ॥
व्यक्तस्वरूपमव्यक्ते तस्मिन् मैत्रेय लीयते ।
एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान् ॥
सोऽप्यंशः सर्वभूतस्य मैत्रेय परमात्मनः ।
न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः ॥
सत्तामात्रात्मके[1] ज्ञेये ज्ञानात्मन्यात्मनः परे ।
स ब्रह्म तत्परं धाम परमात्मा स चेश्वरः ॥
स विष्णुः सर्वमेवेदं यतो नाऽऽवर्त्तते यतिः ।
प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी ॥
पुरुषश्चाऽप्युभावेतौ लीयते परमात्मनि ।
परमात्मा च सर्वेषामाधारः परमेश्वरः ॥
विष्णुनाम्ना स वेदेषु वेदान्तेषु च गीयते ।

महाभारते

अक्षरोऽग्रे ततो वायुः वायोर्ज्योतिस्ततो जलम् ।
जलात्प्रसूता जगती जगत्यां जायते जगत् ॥

1 सत्तायात्रात्मके—मु पु

॥ १२ ॥

# अथ शरीरचिन्ता

तत्र देवमनुष्यतिर्यगनुवृत्तौ देवलः

तेषां त्रिविधो मूर्तिविशेषो-द्युतिमत्, सुगन्ध्यनिष्पाद्यमनाविलमनिमिषमस्वेदं, क्षुत्पिपासानिद्रालस्यवर्जितं, यथेष्टाकृतिबलसन्नहनमूर्जस्वि, निर्मलं, परमपुष्कलं, सुकृतनिमित्तं, देवताशरीरम्। अनित्यमशुभं, सर्वरोगायतनं, दुःखभाजनमनेकबाधमस्थिसंघातशिरास्नायुनद्धं, मांसावलिप्तं, त्वक्प्रतिच्छन्नं, अन्नरसनानाशोणितमेदोमांसमज्जारेतःपित्तानिलश्लेष्मांत्रगुदबस्तियकृत्प्लीहक्लेद स्वेद[1] मूत्रपुरीष कृमिपूर्णं, नवच्छिद्रं, सन्तताश्रावं, केशरोमनखपर्यन्तं, दुर्गंधि, नित्यसंस्कार्यं, जरामरणवशमिति मानुषशरीरम्। सन्ततोद्विग्नमसंस्कारं, विधूतनिष्यदं, क्षुत्पिपासावशं, मूढेन्द्रियगोचरं, दुष्कृतायनमज्ञानमकर्मण्यमिति तिर्यग्योनिशरीरम्।

तथा[2]

इच्छा द्वेषस्सुखं दुःखं क्षुत्तृष्णा चेष्टितं भयम्।
उत्पत्तिर्मरणं चेति सामान्यं सर्वदेहिनाम्॥

1 स and ना omit स्वेद

2 Nagpur Ms has तथा

अवश्यं प्राणिनः सर्वे रमन्ते स्वासु योनिषु ।
असत्समाविशिष्टानां न जातिरिति निश्चयः ॥
अमेध्यमतिदुर्गन्धि निस्सार दुःखभाजनम् ।
अध्रुवं बहुदुःखं च शरीरं गर्भवासिनाम् ।
विण्मूत्रकृमिसम्पूर्णं रोगायतनमातुरम्[2] ।
शरीर यापयन्तीह सदा स्नानाशनादयः ॥
शय्या च क्रमणं स्थानमासनं च यथाक्रमम् ।
स्वजातिं न परित्यक्तुमिच्छन्ति प्राणिनः क्वचित् ॥
देही देहं परित्यज्य नेन्द्रस्थानमपीहते ।
तस्मात्कीटोऽपि जन्तूनां स्वजात्या रमते भृशम् ॥

'यथेष्टाकृतिबलसन्नहनं' यथेष्टं जातिसामर्थ्यावयवसंघाता यत्र तत्तथा ।

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत् ॥

विष्णुपुराणे

[1]क्व शरीरमशेषाणां श्लेष्मादीनां समा च यः ।
क्व कान्तिशोभासौरभ्यं कमनीयादयो गुणाः ॥
मांसास्थ्यसृग्वसापूयस्नायुविण्मूत्रसंहतौ ।
देहे चेत् प्रीतिमान् मूढो भविता नरकेऽपि सः ॥

1 भाजनम्—ना
2 १, १७, ६२

[1]**मनुः**

उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिणः।
ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः॥
अपुष्पाः फलवन्तो ये ते वनस्पतयस्स्मृताः।
पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः॥
गुच्छगुल्मं च विविधं तथैव तृणजातयः।
[2]प्रतानाश्चैव वल्यश्च वीरुधः परिकीर्तिताः॥
तमसा बहुरूपेण वेष्टिताः कर्महेतुना।
अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः॥

**महाभारते**

जङ्गमानां च सर्वेषां शरीरे पञ्च धातवः।
प्रत्येकशः प्रभिद्यन्ते यैः शरीरं विचेष्टितम्॥
त्वङ्मांसं च तथाऽस्थीनि मज्जा स्नायुश्च पञ्चमः।
इत्येतदिह संख्यातं शरीरं पृथिवीमयम्॥
तेजोऽग्निश्च तथा क्रोधश्चक्षुरूष्मा तथैव च।
अग्निर्जरयते चाऽपि पञ्चाऽऽग्नेयाः शरीरिणः॥
श्रोत्रं घ्राणमथाऽऽस्यं च हृदयं कोष्ठमेव च।
आकाशात्प्राणिनामेते शरीरे पञ्च धातवः॥
श्लेश्मपित्तमथ स्वेदो वसा शोणितमेव च।
इत्यापः पञ्चधा देहे भवन्ति प्राणिनां सदा॥
प्राणात्प्राणयते प्राणी व्यानाद्व्यानयते सदा।
गच्छत्यपानोऽवागेव समानो हृद्यवस्थितः॥
उदानादुच्छ्वसिति च ध्वनिभेदश्च जायते।
इत्येते वायवः पञ्च चेष्टयन्ति च देहिनम्॥

1 १, ४६–४९
2 'बीजकाण्डरुहाण्येव प्रतानावल्य एव च' इति कुल्लूकपाठ

॥ १३ ॥

# अथ देहशरीरविवेकः

तत्र शङ्खः

पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
पञ्चैतानि विजानीयान्महाभूतानि पण्डितः ॥
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
बुद्धीन्द्रियाणि जानीयात् पञ्चैवाऽस्मिन् शरीरके ॥
मनो बुद्धिस्ततश्चात्मा अव्यक्तं च तथैव च[1] ।
इन्द्रियेभ्यः पराण्याहुश्चत्वारि कथितानि तु ॥
शब्दं रूपं तथा स्पर्शं रसं गन्धं तथैव च ।
इन्द्रियाऽर्थं विजानीयात् पञ्चैव सततं बुधः ॥
हस्तपादावुपस्थं च जिह्वा पायुस्तथैव च ।
कर्मेन्द्रियाणि पञ्चैव नित्यमस्मिन् शरीरके ॥
चतुर्विंशतितत्त्वानि एतानि कथितानि तु ।
तथाऽऽत्मानं तु तं विद्धि पुरुषं पञ्चविंशकम् ॥
[2]वालाग्रशतिमो भागः कल्पितस्तु सहस्रशः ।
तस्याऽपि शतिमाद्भागाज्जीवः सूक्ष्म उदाहृतः ॥

1 अव्यक्तं चैवमेव च—ना and स

2 स बाला ग्रहातियोभाग , ना बालग्रहा इति यो भाग

**विष्णुपुराणे**

[1]विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा ।
अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिः सा चेष्टिता नृप सर्वगा ।
संसारतापानखिलानवाप्नोत्यनुसन्ततान् ॥
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
[2]सर्वभूतेषु भूपाल तारतम्येन लक्ष्यते ॥

[3]'विष्णुशक्तिः परा' ब्रह्मस्वरूपात् क्षेत्रज्ञाख्या । 'अपरा'जीवस्वरूपा [4]मायाऽविद्याकर्मसंज्ञा ।

[5]**मनुः**

[6]अस्याऽऽत्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥
जीवसंज्ञोऽन्तरात्माऽन्यः सहजः सर्वदेहिनाम् ।
येन वेदयते सर्वं सुखं दुःखं च जन्मसु ॥

'अस्याऽऽत्मनः' शरीररूपस्य आत्मार्थत्वादात्मशब्दोऽत्र गौणः[7]। 'कारयिता' स्पन्दात्मिकासु चेष्टासु प्रवर्तयिता। स्वप्रयत्नद्वारेण । 'भूतात्मा' पृथिव्यादिभूतसंघातत्वात् शरीरम् । 'जीवसंज्ञोऽन्तरात्मा अन्यः' अन्तःकरणं मनो रूपं जीवोऽन्तरात्मा चाऽयमेव । 'तदर्थत्वात्' तस्य चान्तः-

1 ६, ७, ६१
2 सर्वभूते तु—स
3 विष्णुशक्ति परा पर ब्रह्मस्वरूपा—स and ना
4 यया अविद्यया कर्मस्वरूपा—ना
5 १२, १२–१३
6 योऽस्यात्मन कारयिता इति—मु मनौ
7 शब्दोऽगौण (?)—ना

करणत्वात्। 'येन वेदयत' इति करणविभक्त्या निर्देशः। 'सहजः" आमोक्षप्राप्तेस्तत्संबन्धात्।

महाभारते

तत्र यः परमात्मा हि [1]स नित्यं निर्गुणः स्मृतः।
स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः॥
न लिप्यते कर्मफलैः पद्मपत्रमिवाम्भसा।
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते॥
स सप्तदशकेनाऽपि राशिना युज्यते पुनः।

'सप्तदशकेन' दशेन्द्रियाणि मनो बुद्धिः प्राणाद्याः पञ्च वायव इत्यनेन गणेन।

तथा

स चेतनं [2]जीवगुणं वदन्ति
स चेष्टते च म्रियते च नित्यम्।
ततः परं क्षेत्रविदो वदन्ति
प्रावर्त्तयद्यो भुवनानि सप्त॥

तथा च महाभारते

तथा च भरद्वाज उवाच—

[3]यद्यग्निमारुतौ भूमिः खमापश्च शरीरिषु।
जीवः किं लक्षणस्तत्रेत्येतदाचक्ष्व मेऽनघ॥
यदि प्राणायते वायुर्वायुरेव विचेष्टते।
श्वसित्याभाषते चैव तस्माज्जीवो निरर्थकः॥

1 सतत for सनित्यं—ना
2 यत्र गुण for जीवगुण—ना and स
3 शा—१८५, ११.

[1]यद्युष्मभावमाग्नेयो ह्यग्निना पच्यते यदि ।
अग्निर्जरयते चैव तस्माज्जीवो निरर्थकः ॥
जन्तोः प्रमीयमाणस्य जीवो नैवोपलभ्यते ।
[2]वायुरेव जहात्येनमुष्मभावश्च नश्यति ॥
यदि वातोपमो जीवः संश्लेषो यदि वायुना ।
वायुमण्डलवद्दृश्येद्गच्छेत्सह मरुद्गणैः ॥

'वायुमण्डलवद्दृश्येदि'ति वातोपम जीवपक्षे दूषणम्[3]। 'वायुसंश्लेषो जीव' इत्यत्र पक्षे वायुमण्डलवद्दृश्येदिति उत्क्रान्तिकालवातसमूहवत् स्पर्शने नोपलभ्यत इत्यर्थः। '[4]गच्छेत्सह मरुद्गणै'रिति यां दिशं वायुसमूहाः यान्ति तां दिशं गच्छेत्, न चैवं धर्माऽधर्मवशेन स्वर्गनरकप्राप्तेः श्रुति-प्रतिपादितत्वात्। तथा—

भृगुरुवाच ।

[5]न पञ्च साधारणमत्र किञ्चित्
शरीरमेको वहतेऽन्तरात्मा ।
स वेत्ति गन्धांश्च रसान् श्रुतिश्च
स्पर्शं च रूपं च गुणाश्च येऽन्ये ॥
पञ्चात्मके पञ्चगुणप्रदर्शी
स सर्वगात्रानुगतोऽन्तरात्मा ।

1 omits the verse beginning यद्युष्मभाव—वी मि मो, पृ २२४

2 वायुरेष—वी मि मोक्ष, पृ २२४ B,

3 From here to नोपलभ्यते इत्यर्थ is missing in ना and स

4 The explanation beginning 'गच्छेत्सहमरुद्गणै' is appropriated by वी मि मो, पृ २२५

5 शा, १८५, १७

स वेत्ति दुःखानि सुखानि चाऽत्र
तद्विप्रयोगं तु न वेत्ति देहः ॥

'न पञ्चसाधारणं अत्र किञ्चि'दिति नाऽत्र शरीरे पञ्चभूतेष्वेकं भूतं साधारणम् गन्धाद्यनेकार्थानुसन्धातृ विद्यते। अस्ति चाऽनेकार्थानुसन्धातृ अस्ति चाऽनेकानुसन्धानम्। अतः एतेभ्योऽन्योऽन्तरात्मा गन्धादीनामनुसन्धाता विद्यत इत्यर्थः। वहते धावति। 'अन्ये गुणाः' सुखादयः।

याज्ञवल्क्यः[1]

महाभूतानि सत्यानि यथाऽऽत्मापि तथैव हि।
[2]कोऽन्यं चैकेन नेत्रेण दृष्टमन्येन पश्यति ॥
वाचं वाँ को विजानाति पुनः संश्रुत्य संश्रुतम्।
अतीताऽर्थे स्मृतिः कस्य को वा स्वप्नस्य कारकः ॥
जातिरूपवयोवृत्तविद्यादिभिरहङ्कृतः।
[3]शक्तः शब्दादिविषये कर्मणा मनसाऽपि वा ॥

तथा[4]

वेदैः शास्त्रैः सविज्ञानैर्जन्मना मरणेन च।
आर्त्या गत्या तथाऽगत्या सत्येन ह्यनृतेन च ॥
श्रेयसा सुखदुःखाभ्यां कर्मभिश्च शुभाशुभैः।
निमित्तशाकुनज्ञानग्रहसंयोगजैः फलैः ॥

1 ३, १४९—१५१

2 'कोऽन्यथैकेन' इति मिताक्षरावीरमित्रोदय पाठ सरस्वतीभवनमातृकयाऽऽदृत।

3 'शब्दादि विषयोद्योग कर्मणा मनसा गिरा' इति मिताक्षरापाठ, मूलमातृकापाठ मित्रमिश्रेनाऽऽदृत।

4 A break is indicated by तथा—याज्ञ, ३, १७०–१७६

तारानक्षत्रसंचारैर्जाग्रज्ज्ञैः स्वप्नजैरपि ।
आकाशपवनज्ज्योतिर्जलभूतिमिरैस्तथा ॥
[1]मन्वन्तरैर्युगप्राप्त्या [2]मन्वन्तरफलैरपि ।
[1]वित्तात्मानं वेद्यमानं कारणं जगतस्तथा ॥
अहंकारः स्मृतिर्मेधा द्वेषो बुद्धिः सुखं धृतिः ।
इन्द्रियान्तरसञ्चार इच्छा [3]मरणजीविते ॥
स्वर्गः स्वप्नः स्वभावानां प्रेरणं मनसो गतिः ।
निमेषश्चेतनायत्त आदानं पाञ्चभौतिकम् ॥
यत एतानि लिङ्गानि दृश्यन्ते परमात्मनः ।
तस्मादस्ति परो देहादात्मा सर्वग ईश्वरः ॥

'एकनेत्रेणेति' एकेन चक्षुरिन्द्रियेण दृष्टं वस्त्वपरेण स्पर्शनेन्द्रियेण विजानाति । योऽहमद्राक्षं सोऽहं स्पृशामीति 'वित्ताऽऽत्मान'मात्मानमेतैः कारणैर्विजानाति[4] ।

महाभारते

यथैव कश्चित् परशुं गृहीत्वा
धूमं न पश्येत् ज्वलनं च काष्ठे ।
[5]तद्वच्छरीरोदरपाणिपाद-
च्छिन्नं न पश्यन्ति ततो यदन्यत् ॥
[5]अन्यत्काष्ठानि यदा विमथ्य
धूमं च पश्येज्ज्वलनं च काष्ठे ।

1 Missing in स

2 'मन्त्रौषधिफलैरपि' इति मिताक्षरापाठ, मित्रमिश्रेण च आदृत

3 'धारण' for मरण—मिताक्षरापाठ

4 *Cf* मिताक्षरा—"एकेन चक्षुरिन्द्रियेण दृष्ट वस्तु अन्येन स्पर्शनेन्द्रियेण को विजानाति यमहं अद्राक्ष तमह स्पृशामीति ।"
मित्रमिश्र cites the explanation of विज्ञानेश्वर

5 Omitted by ना and स

तद्वत्सुबुद्धिः स सदिन्द्रियत्वात्
ध्रुवं परं पश्यति स्वं स्वभावम् ॥
यथाऽऽत्मनोऽङ्गं पतितं पृथिव्यां
स्वप्नान्तरे पश्यति चाऽऽत्मनोऽन्यत् ।
श्रोत्रादियुक्तः सुमनाः सुबुद्धिः
लिङ्गात्तदा गच्छति लिङ्गमन्यत् ॥
यदिन्द्रियैस्तूपहितान् पुरस्तात्
प्राणान् गुणान् संस्मरते चिराय ।
तेष्विन्द्रियेषु प्रहृतेषु पश्चात्स-
बुद्धिरूपात् परमप्रभावः ॥
यथेन्द्रियार्थान् युगपत् समस्तान्
नाऽऽपद्यते कृत्स्नमनल्पकाले ।
यथाबलं सञ्चरते स विद्वान्
तस्मात्स एकः परमः शरीरी ॥
यथा हिमवतः पार्श्वं पृष्ठं चन्द्रमसो यथा ।
न दृष्टपूर्वं मनुजैर्न च तन्नास्ति[1] तावता ॥
तद्वद्भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ ।
अदृष्टपूर्वश्चक्षुर्भ्यां न चाऽसौ नास्ति तावता ॥
न शरीराश्रितो जीवस्तस्मिन्नष्टे विनश्यति ।
यथा समित्सु दग्धासु न प्रणश्यति पावकः ॥
न जीवनाशोऽस्ति हि देहनाशे
मिथ्यैतदाहुर्मृत इत्यबुद्धाः ।
जीवस्तु देहान्तरगः प्रयाति
दशार्द्धतेवास्य शरीरभेदः ॥

1 तत्रास्ति for तन्नास्ति—उ.

यथाऽर्चिषोऽग्नेः पवनस्य वेगाः
मरीचयोऽर्कस्य नदीषु चाऽऽपः ।
गच्छन्ति चाऽऽयान्ति च सन्ततास्तु
तद्वच्छरीराणि शरीरिणां तु ॥

'दशार्द्धता' पञ्चता, मरणमित्यर्थः ।

तथा[1]

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥

तथा

नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्वदर्शिभिः ॥
अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्याऽस्य न कश्चित् कर्तुमर्हति ॥
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नाऽयं हन्ति न हन्यते ॥
न जायते म्रियते वा कदाचिन्
नाऽयं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥
वेदाऽविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥

1 भगवद्गीता—२, १३, १६–२४

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥
अच्छेद्योऽयमदाह्योऽय मक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥
अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।

[1]<u>मार्कण्डेयपुराणे</u>

सा वै मदालसा पुत्रं बालमुत्तानशायिनम् ।
उल्लापनच्छलेनाऽऽह रुदमानमविस्मयम्[2] ॥
शुद्धोऽसि रे तात न ते ऽस्ति नाम
कृतं हि तत् कल्पतयाऽधुनैव ।
पञ्चात्मकं देहमिदं न तेऽस्ति[3]
नैवाऽस्य त्वं रोदिषि कस्य हेतोः ॥
न वा भवान् रोदिति विश्वजन्मा
शब्दोऽयमासाद्य महीसमूहम्[4] ।
विकल्प्यमानो विविधैर्गुणाद्यै[5]
र्गुणाश्च भौताः सकलेन्द्रियेषु ॥

1 २५, १०–१८
2 अविस्वरमिति मुद्रित पुराणे (जीवानन्दमुद्रिते)
3 'इद तवैतत्' इति मु पु, पृ १५८
4 'महीशसूनुम्' इति मु पु, पृ १५८
5 'विकल्प्यमाना विविधा गुणास्तेऽगुणाश्च भौता सकलेन्द्रियेषु।' इति मु पु १५८

भूतानि भूतैः परिदुर्बलानि
वृद्धिं समायान्ति यथैव पुंसाम् ।
अन्नाम्बुपानादिभिरेवमस्य[1]
न तेऽस्ति वृद्धिर्न च तेऽस्ति ह्वानिः ॥
त्वं कञ्चुके शीर्यमाणे निजेऽस्मिन्
[2]विमूढभावं सहसा मा व्रजेथाः ।
शुभाशुभैः कर्मभिर्देहमेतन्
मदादिमूढैः कञ्चुकस्तेपिनद्धः ॥
तातेति किञ्चित् तनयेति किञ्चित्
अम्बेति किञ्चिद्दयितेति किञ्चित् ।
ममेति किञ्चिन्न ममेति किञ्चित्
त्वं भूतसंघं बहुधा नयेथाः ॥

[3]<u>तथा</u>

यानं क्षितौ यानगतश्च देहो
देहेऽपि चाऽन्यः पुरुषो निविष्टः ।
ममत्वमत्या[4] न तथा यथा स्वे
देहेऽतिमात्रं बत मूढतैषा ॥

[5]<u>तथा</u>

[6]मशकोदुम्बरेषीका मुञ्जमत्स्याम्भसां यथा ।
एकत्वेऽपि पृथग्भावस्तथा क्षेत्रात्मनो भवेत् ॥

1 कस्य for अस्य in मु पु, १५८
2 'तस्मिश्च देहे मूढता मा व्रजेथा' इति मु पु, १५८
3 Two S'lokas are omitted by the text
4 'ममत्वबुद्धि' इति मु पु, १७९
5 Corrected by वी मि मो, पृ २३२ and ना and स
6 ४८, १६

'एकत्वेऽपि' संश्लेषवशेनैकत्वाभिमानेऽपि।

महाभारते

सत्वक्षेत्रज्ञयोरेवमन्तरं विद्धि सूक्ष्मयोः।
सृजतेति गुणानेक एको न सृजते गुणान्॥
ततो वै हृदयग्रन्थिं बुद्धिचित्तमयं दृढम्।
विमुच्य सुखमासीत विमुक्तश्छिन्नसंशयः॥

[1]याज्ञवल्क्यः

अहंकारेण मनसा गत्या कर्मफलेन च।
शरीरेण च नाऽऽत्माऽयं मुक्तपूर्वः कथंचन॥
वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः।
विक्रियाऽपि च दृष्टैव अकाले प्राणसंक्षयः॥
[2]यदाणुमात्रको भूत्वा बीजस्थस्तु चरिष्णुना।
समाविशति संसृष्टस्तदा मूर्तिं विमुञ्चति॥

ब्रह्माण्डपुराणे

[3]ततः प्रयाणकाले हि दोषैर्नैमित्तिकैस्तथा।
उष्मा प्रकुपितः काये तीव्रवायुसमीरितः॥
शरीरमुपवृत्याऽथ कृत्स्नान् दोषान् रुणद्धि वै।
प्राणस्थानानि निर्भिन्दन् पुनर्मर्माण्यतीत्य च॥
शैत्यात् प्रकुपितो वायुरूर्द्ध्वं च क्रमते ततः।
स चाऽयं सर्वभूतानां प्राणस्थानेष्ववस्थितः॥

1 ३, १६४–१६५
2 Not found in याज्ञवल्क्यस्मृति and वी मि मो
3 ४, ३, ६४–६९

तमसा संवृते ज्ञाने संवृतेषु च कर्मसु ।
सजीवोनाऽभ्यधिष्ठानाच्छक्यते मातरिश्वना ॥
स जीवश्चाव्यमानश्च कर्मभिः स्वैः पराक्रमैः ।
अष्टाङ्गां प्राणवृत्तिं तां सम्यग्व्यावयते[1] पुनः ॥
शरीरं प्रजहत्येवं निरुछ्वासं ततो भवेत् ।
एवं प्राणैः परित्यक्तो मृत इत्यभिधीयते ॥
यथा वलाहकान् व्योम्नि खद्योतं च ततस्तुतः ।
[2]प्रावृट्काले पृथक्त्वेन पश्यन्ति हतचक्षुषः ॥
पश्यन्त्येवंविधं जीवं सिद्धा दिव्येन चक्षुषा ।

[3]**महाभारते**

श्रीभगवानुवाच ।

ममैवांऽशो जीवलोके जीवभूतः सनातनः ।
मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात् ॥
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चाऽयं विषयानुपसेवते ॥
उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।
विमूढा नाऽनुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥

**तथा**

पुरुषाधिष्ठिता बुद्धिस्तेषु भावेषु वर्त्तते ।
कदाचिल्लभते प्रीतिं कदाचिदनुशोचति ॥

1 This is also the reading of ना and वी मि मो, पृ २३२, स reads सम्यग्वारयते पुन ।

2 ४, ३, ७७

3 भगवद्गीता, १५, ७–१०

न सुखेन न दुःखेन कदाचिदपि वर्त्तते ।
इन्द्रियाणां स्वकार्येभ्यो[1] श्रमादुपरमो यथा ॥
भवतीन्द्रियसंन्यासादथ स्वपिति वै नरः ।
इन्द्रियाणामुपरमात् मनोऽनुपरतं यथा ॥
सेवते विषयानेव तद्विन्द्यात् स्वप्नदर्शनम् ।

ब्रह्माण्डपुराणे

[2]अतत्वदर्शनात्तत्वं त्रिविधं बध्यते सदा ॥
प्राकृतेन च वक्त्रेण[3] तथा वैकारिकेण च ।
दक्षिणाभिस्तृतीयेन बद्धोऽत्यन्तं विवर्द्धते ॥
इत्येते वै त्रयः प्रोक्ता बन्धा अज्ञानहेतवः ।
अनित्ये नित्यसंज्ञा च दुःखे च सुखदर्शनम् ॥
अस्वे स्वमिति च ज्ञानमशुचौ शुचिनिश्चयः ।
रागद्वेषविवृद्धिश्च तदज्ञानमुदाहृतम् ॥

देवलः[4]

प्रकृतिबन्धो, वैकारिकबन्धो, दक्षिणाबन्ध इति बन्धत्रयी । तत्राऽव्यक्तादिभिरष्टभिर्बन्धः प्रकृतिबन्धः । इन्द्रियैरिन्द्रियार्थेषु बन्धो वैकारिकबन्धः । इष्टापूर्तादिभिर्बन्धो दक्षिणाबन्धः । तत्र प्रकृतिषु बन्धो देवतानां दक्षिणाभिराश्रमिणां वैकारैरन्येषां धर्मोऽज्ञानानि[5] च बन्धहेतवः ।

1 स्वकर्मभ्य —स and ना
2 ४, २, ३७–४०, अतत्वदर्शनात् सोऽथ—वी मि मो, पृ २४१
3 चक्रेण for वक्रेण—वी मि मो, पृ २४१, and म
4 वी मि मो—पृ, २४१–२४२
5 वी मि मो—पृ, २४२

[1]**महाभारते**

सत्वं रजस्तम इति गुणाः प्रकृतिसंभवाः[2] ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥
तत्र सत्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चाऽनघ ॥
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥
सत्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयेत्युत ॥
रजस्तमश्चाऽभिभूय सत्वं भवति भारत ।
रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा ॥
सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्यात् विवृद्धं सत्वमित्युत ॥
लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥
यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदांल्लोकानमलान् प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥

1 भगवद्गीता—१४, ५–१८
2 प्रकृतिहेतव इति उदयपुरमातृकायाम्

कर्मणः सुकृतस्याऽऽहुः सात्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥
सत्वात् संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥
ऊर्द्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्थाः [1]अधो गच्छन्ति तामसाः ॥

मनुः[2]

सत्वं रजस्तमश्चैव त्रीन् विद्यादात्मनो गुणान् ।
यैर्व्याप्येमान् स्थितो भावान् महान सर्वानशेषतः ॥
यो यथैषां[3] गुणो देहे साकल्येनाऽतिरिच्यते ।
स तदा तद्गुणप्रायं तं करोति शरीरिणम् ॥
सत्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम् ।
एतद्व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः[4] ॥
यच्च दुःखसमायुक्तमप्रीतिकरमात्मनः ।
तद्रजो प्रतिघं[5] विद्यात् सततं हारि देहिनाम् ॥
यत्तु स्यान्मोहसंयुक्तं स व्यक्तविषयात्मकम् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥
तत्र यत् प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत् ।
प्रशान्तमिव शुद्धाभं सत्वं तदुपधारयेत् ॥

1 ना follows S'ankara's reading वृत्तस्था, स adopts Rāmānuja's reading वृत्तिस्था, Udaipur Ms has वृद्धिस्था

2 १२, २४–३८

3 यदैववामिति कुल्लूकपाठ

4 १२, २७ is omitted here by *Lakṣmīdhara* and brought in later

5 प्रतिपम् इति कुल्लूकपाठ

त्रयाणामपि चैतेषां गुणानां यः फलोदयः ।
अग्र्यो मध्यो जघन्यश्च तं प्रवक्षाम्यशेषतः ॥
वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः ।
धर्मक्रियाऽऽत्मचिन्ता च सात्विकं गुणलक्षणम् ॥
आरम्भरतिता[1] ऽधैर्यमसत्कार्यपरिग्रहः ।
विषयोपसेवा चाऽजस्रं राजसं गुणलक्षणम् ॥
लोभः स्वप्नोऽधृतिः क्रौर्यं नास्तिक्यं भिन्नवृत्तिता ।
याचिष्णुता प्रमादश्च तामसं गुणलक्षणम् ॥
त्रयाणामपि चैतेषां गुणानां त्रिषु तिष्ठताम् ।
इदं सामासिकं ज्ञेयं क्रमशो गुणलक्षणम् ॥
यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जते ।
तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम् ॥
येनाऽस्मिन् कर्मणा लोके ख्यातिं गच्छति पुष्कलाम् ।
न च शोचत्यसंपत्तौ तद्विज्ञेयं तु राजसम् ॥
यत्सर्वं नेच्छति ज्ञातुं लज्जते न यदाचरन्[2] ।
येन तुष्यति चास्याऽऽत्मा तत्सत्वगुणलक्षणम् ॥
तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते ।
सत्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथाक्रमम्[3] ॥

'सत्वं' ज्ञानमित्यादि—'ज्ञानं' विवेकः। 'अज्ञानं' मोहः। 'उभयरूपं' रजः। 'रागद्वेष' शब्देनोभयकर्मयोग मुच्यते। सामान्यमेतदेषां लक्षणम् व्यापि सर्वप्राणिषु। अप्रतर्क्यं तर्कोऽनुमानम्, तदगोचरः। सात्विकं लक्षणमिति।

1 आरम्भरुचिता इति कुल्लूकपाठ
2 यत्सर्वेणेच्छति ज्ञातु यन्न लज्जति चाचरन् इति कुल्लूकपाठ
3 'यथोत्तरम्' इति कुल्लूकपाठ

सत्वगुणमेतल्लक्षणमित्यर्थः । 'आरम्भरतिता' कर्मणां काम्यानां दृष्टार्थानां चाऽऽरंभाभिरतित्वम् । 'अधैर्यं' स्वल्पेप्युपद्रवहेतौ चेतसो ऽसमाश्वासः । 'असत्कार्यं' परिग्रहः । 'लोकशास्त्रविरुद्धकर्माचरणं' स्वल्पेऽप्यपराधे वैरानुबन्धः । 'भिन्नवृत्तिता' शीलभ्रंशः । 'याचिता' याचनशीलत्वम् ।

महाभारते[1]

आयुः सत्वबलारोग्यसुखप्रीतिविवर्द्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विकप्रियाः ॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥
यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चाऽमेध्यं भोजनं तामसप्रियम् ॥

तथा[2]

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्विक उच्यते ॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
[3]हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः[3] ॥
अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥

1 भगवद्गीता, १७, ८–१०
2 तथा omitted in the Mss १८, २६–४०
3 Lacuna from this point in सरस्वतीभवन Ms.

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्विकी ॥
यया धर्ममधर्मं च कार्यं चाऽकार्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥
अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥
धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाऽव्यभिचारिण्या धृतिः सा पार्थ सात्विकी ॥
यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च नियच्छति[1] ॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥
यदग्रे चाऽनुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥

1 निगच्छति इति शांकरपाठ

॥ १४ ॥

# अथ जीवब्रह्मात्मभावः

[1]तत्र याज्ञवल्क्यः

[2]निश्चरन्ति यथा लोहपिण्डात्तप्तात् स्फुलिङ्गकाः ।
सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥
तत्राऽऽत्मा हि स्वयं किञ्चित् कर्म किञ्चित्स्वभावतः ।
करोति किञ्चिदभ्यासाद्धर्माधर्मोभयात्मकम् ॥
निमित्तमक्षरः कर्ता बोद्धा ब्रह्म गुणी वशी ।
अजः शरीरग्रहणात् स जात इति कीर्त्यते ॥
सर्गादौ स यथाऽऽकाशं वायुर्ज्योतिर्जलं महीम् ।
सृजत्येकोत्तरगुणांस्तथाऽऽदत्ते भवन्नपि ॥
आहुत्याऽऽप्यायते सूर्यः सूर्याद्वृष्टिरथौषधीः ।
तदन्नं रसरूपेण शुक्रत्वमुपगच्छति ॥
स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते ।
पञ्च धातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः ॥
इन्द्रियाणि मनः प्राणो ज्ञानमायुः सुखं धृतिः ।
धारणं प्रेरणं दुःखं इच्छाऽहंकार एव च ॥
प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ ।
तस्यैतदात्मजं सर्वमनादेरादिमिच्छतः ॥

1 ३, ६७–७४
2 निस्सरन्तीति मिताक्षराहतपाठ

[[1]तथा]

यथा हि भरतो वर्णैर्वर्णयत्यात्मनस्तनुम् ।
नानारूपाणि कुरुते तथाऽऽत्मा कर्मजास्तनूः ॥

[[2]तथा]

आकाशमेकं हि यथा घटादिषु पृथग्भवेत् ।
तथाऽऽत्मैकोऽप्यनेकश्च [3]जलपात्रेष्विवांऽशुमान् ॥

[[4]तथा]

बुद्धीन्द्रियाणि सर्वाणि[5] मनः कर्मेन्द्रियाणि च ।
अहंकारश्च बुद्धिश्च पृथिव्यादीनि चैव हि ॥
अव्यक्त आत्मा क्षेत्रज्ञः क्षेत्रस्याऽस्य निगद्यते ।
ईश्वरः सर्वभूतानां [6]सदसत् सदसच्च यः ॥

'आत्मानः प्रभवन्ति' शुभाशुभकर्मवशेन स्थूलशरीराभिमानिनो जायन्ते । '[7]स्वयं किंचित् करोति' हिताहितप्राप्तिपरिहारार्थं स्वातंत्र्येण यावत् करोति। '[8]स्वभावतो' जात्याद्युपाधिवशेन यत् करोति यथोष्ट्रस्य कण्टकाशनशीलताभ्यासवशेन । 'यत्किंचित्' दानाध्ययनादीनि 'गुणी'

1 ३, १६२

2 ३, १४४

3 जलाधारे इति मिताक्षरापाठ

4 ३, १७८--१७९

5 सार्थानि for सर्वाणि in printed या मि

6 सन्नसन्सदसच्च य इति मु मिताक्षरापाठ

7 वी मि मोक्षप्रकाश —पृ २६७ —

"स्वय किञ्चित्तृप्त स्तन्यपानयो अन्वयव्यतिरेकानुसन्धाननिरपेक्षस्सन् प्राग्भवीयानुभवजन्यसस्कारोद्भूतस्मरणादेव प्रवर्तित स्वभावतो यदृच्छया प्रयोजनाभिसन्धिनिरपेक्ष पिपीलिकादिभक्षण करोति" इति विज्ञानेश्वर

8 "स्वभावत , जातिवशात , यथोष्ट्रस्य कण्ठकाशनशीलता इति" कल्पतरु मुद्रितमिताक्षराया तु पाठोऽन्यथा दृश्यते

शक्तिद्वारेण सत्वादिगुणयोगी 'वशी' स्वतन्त्रः। 'पञ्च धातून्' पञ्च भूतानि। 'धृतिः' चित्तस्थैर्यम्। 'भवः' धनपुत्रादिसंपत्तिः। तद्विपर्ययश्चाऽभवः। 'भरतो' नटः। 'सर्वाणि' शब्दाद्यर्थसहितानि।

[1]महाभारते

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥
क्षेत्रज्ञं चाऽपि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तत् ज्ञानं मतं मम॥

[2]तथा

अनादिमत्परं ब्रह्म न सत्तन्नाऽसदुच्यते।
सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥

[तथा[3]]

उपद्रष्टाऽनुमन्ता च भर्त्ता भोक्ता महेश्वरः।
परमात्मेति चाऽप्युक्तो देहेऽस्मिन् पुरुषः परः॥

[तथा][4]

अनादित्वान्निर्गुणत्वात् परमात्माऽयमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्वत्राऽवस्थितो देहे तथाऽऽत्मा नोपलिप्यते॥

1 भगवद्गीता, १३, १–२
2 भगवद्गीता, १३, १२–१३
3 भगवद्गीता, १३, २२
4 भगवद्गीता, १३, ३१–३३

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥

तथा (?)

[1]एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥

[2]तथा

आश्चर्यवत् पश्यति कश्चिदेन-
माश्चर्यवद् वदति तथैव चाऽन्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥

याज्ञवल्क्यः[3]

यद्येवं स कथं ब्रह्मन् पापयोनिषु जायते ।
[4]ईश्वरः स कथं भावैरनिष्टैः[5] संप्रयुज्यते ॥
करणैरन्वितस्याऽपि पूर्वज्ञानं कथञ्च न ।
वेत्ति सर्वगतां कस्मात्सर्वगोऽपि न वेदनाम् ॥

[[6]तथा]

रजसा तमसा चैव[7] समाविष्टो भ्रमन्निह ।
भावैरनिष्टैः संयुक्तः संसारं प्रतिपद्यते ॥

1 कठोपनिषत्, ३, १२, 'तथा' is wrong as it is not found in the *Gītā*
2 भगवद्गीता, २, २९
3 ३, १२९—
4 Lacuna in Sarasvatībhavan Ms ends here
5 अनिष्टै इति **मिताक्षरा**पाठ
6 ३, १४०–१४३
7 एव इति **मिताक्षरा**पाठ

मलिनो हि यथाऽऽदर्शो रूपालोकस्य न क्षमः ।
[तथाऽविपक्वकरण आत्मज्ञानस्य न क्षमः][1]
कट्वेर्वारौ यथाऽपक्वे मधुरः सन्नसोऽपि न ॥
प्राप्यते ह्यात्मनि तथा नाऽपक्वकरणे ज्ञता ।
सर्वाश्रयां निजे देहे देही विन्दति वेदनाम् ॥
योगी युक्तश्च सर्वासां यो न चाऽऽप्नोति वेदनाम् ।

'यद्येवं सति' यद्यात्मैव जीवभावं भजते, तर्ह्यसौ पापयोनिषु शूकरादिकासु जायते ।

'यद्येव' मित्यादिनोक्तप्रश्नत्रये क्रमेणोत्तरमाह—'रजसा तमसा चे'त्यादिना ।

'कट्वेर्वारौ' तिक्तकर्कटिकायाम् । 'निजदेहे' स्वकर्मोपार्जितशरीरे । 'योगी युक्तश्चे'त्यादि यश्च योगी युक्तो भवति सर्वासां वेदनानां वेदिता भवति । न च दुःखोपभोक्तेत्यर्थः ।

ब्रह्मपुराणे

एक एव परात्माऽसौ द्विधा भिन्नस्तु दृश्यते ।
भोक्ता भोज्यं च लोकेऽस्मिन् स एव परमेश्वरः ॥
कुर्वन्त्यचेतनाः कर्म देहेन्द्रियगुणाः समाः ।
चेतनस्तदधिष्ठाता शान्तात्मा न करोत्यसौ ॥
चलत्यचेतनं शस्त्रं ग्रामके निकटस्थिते ।
देहे च करणग्रामे चेष्टते तदधिष्ठितः ॥
आदित्येऽभ्युदिते लोकः कर्माणि कुरुते रविः ।
[2]न तानि कुरुते नाऽन्यत् कारयत्यपि कुत्रचित् ॥

1 [ ] missing in the Mss
2 Four lines from this are confused in स

किन्तु स्वभाव एवैष नैत्यिकः सूर्यलोकयोः ।
चिन्मात्रः सूर्यवद्ज्ञेयो लोकवत् करणान्यपि ॥
चैतन्यबोधितस्याऽपि ममतामूर्छितस्य च ।
प्रभवे सुखदुःखेषु भावना मनसो भवेत् ॥
द्रष्टृत्वे चाऽऽत्मकर्तृत्वे भोक्तृत्वे कर्मणामपि ।
उत्तमाधममध्यानां ममाऽहमिति मूढवत् ॥
सर्वगोऽपि शरीरस्थस्तद्ज्ञानमनुवर्त्तते ।
नानाविधानां वर्णानां वर्णं धत्ते सुनिर्मलः ॥
स्फटिको न च ते तस्मादुत्पन्नास्तेऽपि नाप्यसौ ।
रजस्तमोभ्यां तत्वस्य यथोपाधिश्च निर्मितः ॥
तस्य भारं विभुर्धत्ते न ते तस्य न तस्य सः ।
चले चलः स्थिरे तिष्ठंस्तोये चन्द्रार्कबिम्बवत् ॥
आत्मा तु करणग्रामे दृश्यते न च तत्तथा ।
अदृश्यो दृश्यतामेति राहुश्चन्द्रार्कमण्डले ॥
आत्मा सर्वगतो बुद्धौ दृश्यते चाऽपि संस्थितः ।
दर्शने निर्मले लोको निश्चैतन्यैः स्वमाननम् ।
पश्यत्यात्मानमात्माऽयं निर्मलायां धियि त्वयि ॥
वर्णाश्रमास्तथा वासः स्वर्गे नरक एव च ।
पुरुषस्य न सन्त्येते परमात्मनः कुत्रचित् ॥
दृश्यते च जगद्रूपमसत्यं सत्यवन्मृषा ।
तोयवत् मृगतृष्णास्तु तथा मरुमरीचिषु ॥
एक एव सूर्यो बहुधा जलाधारेषु दृश्यते ।
आभाति परमात्मैव सर्वाधारेषु संस्थितः ॥
[1]ब्रह्म चैव शरीरेषु बाह्ये चाऽभ्यंतरे स्थितम् ।
आकाशमिव कुम्भेषु बुद्धिगम्यं न चाऽन्यथा ॥

1 ब्रह्म सर्वं शरीरेषु इति ना.

एवं सति यया बुद्ध्या देहोऽहमिति मन्यते ।
अनात्मनात्मनो भ्रान्त्या सा स्यात् संसारबन्धना ॥
सर्वैर्विकल्पैर्हीनस्तु शुद्धो बुद्धोऽजरामरः ।
प्रशान्तो व्योमवद् व्यापी चैतन्यात्मा सकृत्प्रभुः ॥
शर्करा गुडखण्डा वा यथैवेक्षुरसोद्भवाः ।
तथाऽवस्थाप्रभेदाश्च बहुरूपा इहाऽऽत्मनः ॥
प्राणोऽचिरादविज्ञानमन्तर्याम्यविकारकः ।
देशकालशरीराग्निं तस्याऽवस्थाभिधानवत् ॥
प्राणाद्यनन्तभेदैश्च स्वमात्मानं तु जालवत् ।
विहृत्य संहरत्येष क्रीडमानः स्वयं हरिः ॥
अप्राप्तैरादिमध्यान्तैर्भ्रमभूतैस्त्रिभिः सदा ।
जाग्रत्स्वप्नसुषुप्तैश्च छादितं विश्वतेजसम् ॥
तुर्यं तु परमात्मानमव्यक्तं शाश्वतं पदम् ।
ज्ञेया जाग्रदवस्था च प्रजागरणजाग्रवत् ॥
स्वप्नावस्था च हृद्व्योम्नि सूक्ष्मनाड्या स्थितस्य च ।
देहेन्द्रियगुणानां च परित्यागः सुषुप्तता ॥
संबोधः सर्वभावानां तुर्यं चिन्मात्रमुच्यते ।
धूमाभ्रधूलिभिर्व्योम यथा न मलिनीयते ॥
प्राकृतैरपमृष्टो न विकारैः पुरुषस्तथा ।
यथैकस्मिन् घटाकाशे मलैर्धूमादिभिश्चिते ॥
नाऽन्ये यान्ति मलिनतां दूरस्थाः कुत्रचित्क्वचित् ।
तथा द्वन्द्वैरनेकैश्च जीवे च मलिनीकृते ॥
एकस्मिन्नाऽपरे जीवा मलिनाः सन्ति कुत्रचित् ।

'भोज्यं' पृथिव्यादि विकारजातम् । 'शस्त्रं' लोहम् । 'तत्स्वभावानुगं मनः' स्वभावानुगः । 'धियि' बुद्धौ

महत्तत्वे। 'अभिधानवत्' देवदत्तादिनामवत्। 'दूरस्थाः' घटाकाशाः।

**तथा**

एकस्मादेव चैतन्याज्जाताः क्षेत्रज्ञजातयः।
लोहात् ज्वलनसन्दीप्तान्मरीचय इवाऽऽस्तृताः॥
विभागत्यागसंयोगजन्ममृत्युसमागमैः।
वर्जितः सर्वभूतात्मा नभः कुंभेष्ववस्थितः।
तत्र सक्तस्तु पुरुषो बध्यते प्रकृतेर्वशात्॥
चौरसंसर्गदोषेण बध्यते शीलवानिव।
तुषारो बुद्बुदः फेनो जलस्य सहजाश्रयः॥
अग्नेर्धूमस्तथा विष्णोर्मायैषा सहजा सदा।
एतां विमोहनिर्व्यक्तां मायां द्वैतस्वरूपिणीम्[1]॥
अद्वैतं भावयेद्ब्रह्म सकलं निष्कलं सदा।

**[2]महाभारते**

श्रीभगवानुवाच।

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते॥
पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु॥

1 "एता व्यामोहिनी व्यक्ता माया वै तस्य रूपिणीम्" इति ना
2 भगवद्गीता, १३, १९–२१

[1]प्रकृतिस्तेजोबन्नलक्षणा प्रवाहरूपेणाऽनादिः, सर्गः पुनः प्रलयः पुनरिति संसारस्याऽनादित्वात्। पुरुषः परमात्मांशोऽनादिरभिन्नोऽपि सन् परमार्थतो न कदाचिद्व्यक्तपूर्वः। 'कर्माऽविद्याभ्यामि'ति, कार्यं शरीरं, कारणानीन्द्रियाणि, तयोः कर्तृत्वे निर्वर्तकत्वे प्रकृतिः कारणं। एतेन भोग्यवर्गः सर्वः प्रकृतितो जायत इत्युक्तं भवति। 'प्रकृतिस्थः' कार्यकारणसङ्घातस्थः। 'भुंक्ते [2]प्रकृतिजान्' प्रकृतितोजातान् सुखदुःखमोहान् भुंक्ते। 'गुणेषु' कार्यकारणलक्षणेषु 'सङ्गो' विपरीतग्रहोऽहंममेति प्रत्ययः सदसद्योनिप्राप्तिषु कारणमित्यर्थः। 'सद्योनयो' देवाद्याः, 'असद्योनय' स्तिर्यगाद्याः, मध्ययोनयस्तु मनुष्या इति।

[3]<u>तथा</u>

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥

1 वी मि मोक्षप्रकाश, पृ २६३—"**कल्पतरुस्तु**—प्रकृतिस्तेजोवन्नलक्षणा अनादि पुनस्सर्ग पुन प्रलय इति प्रवाहरूपेण। पुरुषो जीव अनादि परमात्मनोंऽशोऽभिन्नोपि सन्नविद्यया पूर्व न कदाचिद्व्यक्त इति व्याचख्यौ"

2 वी मि मोक्षप्रकाश, पृ २६३—"प्रकृतिर्माया। सा मिथ्यैव। तादात्म्येनोपगम। 'प्रकृतिस्थ' इति **भाष्यकार**। कार्यकारणसङ्घातस्थ इति **कल्पतरु**, "'प्रकृतिस्थ', प्रकृतिसंसृष्ट" इति श्रीरामानुजभाष्ये, "'प्रकृतिस्थ' प्रकृतौ अविद्यालक्षणाया स्थित प्रकृतिस्थ" इति श्रीशाङ्करभाष्ये

3 भगवद्गीता, ७, ४–७

मत्तः परतरं नाऽन्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥
[1]ये चैव सात्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥
त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाऽभिजानाति मामेभ्यः परमव्ययम् ॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥
न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥

[तथा]

[2]मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाऽहं तेष्ववस्थितः ॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः ॥
यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥
न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥

1 भगवद्गीता, ७, १२–१५
2 भगवद्गीता, ९, ४–१३

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्त्तते ॥
अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥

[तथा]

[1]अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामवष्टभ्य सम्भवाम्यात्ममायया ॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

'जीवभूतां' जीवत्वं प्राप्ताम् । भोक्तृत्वेनाऽवस्थितां चेतनाम् । 'प्रोतं' ग्रथितम् ।

विष्णुपुराणे

[2]विस्तारः सर्वभूतस्य विष्णोर्विश्वमिदं जगत् ।
द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः ॥

तथा

[3]ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥

1 भगवद्गीता, ४, ६–८
2 १, २७, ८४
3 १, ५, ४०

[1]ज्योतींषि विष्णुर्भुवनानि विष्णुः
वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वं
यदस्ति यन्नाऽस्ति च विप्रवर्य ॥
ज्ञानस्वरूपो भगवान् यतोऽसा-
वशेषमूर्तिर्न च वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान्
जानीहि विज्ञानविजृम्भितानि ॥
यदा तु शुद्धं निजरूपि सर्वं
कर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि
भवन्ति नो वस्तुषु वस्तुभेदाः ॥
वस्त्वस्ति किं कुत्रचिदादिमध्य-
पर्यन्तहीनं सततैकरूपम् ।
यच्चाऽन्यथात्वं द्विज याति भूयो
न तत्तथा तत्र कुतो हि तत्वम्[2] ॥
[2]मही घटत्वं घटतः कपालिकाः
कपालिका चूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मस्तिमितात्मनिश्चयै-
रालक्ष्यते ब्रूहि किमत्र तत्वम्[3] ॥
तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्
क्वचित् कदाचित् द्विज वस्तुजातम् ।

1 विष्णुपुराण (गोरखपुर) २, १२, ३८–४७

2 Sentence confused in all three manuscripts restored from printed वि पु

3 वस्तु इति मु पु, पृ १७५

विज्ञानमेकं निजकर्मभेद-
विभिन्नवृत्तैर्बहुधाऽभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोक-
मशेषलोभादि निरस्तसंज्ञम् ।
एकं सदेकं परमं परेशः
स वासुदेवोऽस्ति यतो न किञ्चित्[1] ॥
सद्भाव एवं भवतो मयोक्तो
ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतं
तत्राऽपि चोक्तं भुवनाश्रितं ते ॥
यज्ञे पशुर्वह्निरशेष ऋत्विक्
सोमः सुराः स्वर्गमयश्च कामः ।
इत्यादिकर्माश्रितमार्गदृष्टं
भूरादिभोगाश्च फलानि तेषाम् ॥
यच्चैतत् भुवनगतं मया तवोक्तं
सर्वत्र व्रजति हि तत्र कर्मवश्यः ।
ज्ञात्वैतत् ध्रुवमचलं स चैकरूपं
तत्कुर्याद्विशति हि येन वासुदेवम् ॥

'ज्ञानस्वरूपं' ज्ञानं चित्स्वरूपं, ब्रह्म तदात्मकं जगत् । यथा मृत्स्वरूपो घटः । 'अबुद्धयः' अतत्वज्ञाः । '[2]अर्थ-स्वरूपं' यत् स्वभावं प्रकृत्याद्यर्थोपादनतया तत्स्वरूपम् ।

1 'स वासुदेवो न यतोऽन्यदस्ति' इति मु पु, पृ १७५

2 वी मि मोक्षप्रकाश, पृ २७१ —

"अर्थस्वरूप प्रवृत्याद्यर्थकार्यकारित्वेन सद्रूप मन्यमाना 'मोहसप्लवे' अज्ञानसागरे, मिथ्याज्ञानसागरे इति कल्पतरु "

'मोहसंप्लवे' मिथ्याज्ञानसागरे। 'यदस्ति यन्नास्ति चे'ति यद्भावस्वरूपं तत्सर्वं स एवेत्यर्थः। 'न च वस्तुभूतः' न यत् पृथिव्यादिभिः भूतः। 'नो वस्तुषु वस्तुभेद' इति न क्रियाकारकवस्तुषु पृथिव्यादिषु जातस्वभावेष्वेव सत्सु वस्तुभेदात् घटादयो भवन्ति। किन्तु संकल्पवशेनेत्यर्थः। तथा च श्रुतिः

'संकल्पादेवाऽस्य पितर उपतिष्ठन्ति' इति।

व्याख्यातश्चेदं 'संकल्पादेव तु तच्छ्रुतेः' इत्यत्र वेदान्तसूत्रे। 'असत्यमन्य'दिति अन्यद्ब्रह्माव्यतिरिक्तमसत्यमन्यथात्वं भजते विनश्यतीत्यर्थः। 'सद्भाव एवं' इत्यादि श्लोके कर्मकालस्याऽनित्यत्वात् 'ज्ञानेन वासुदेवप्राप्तौ यत्नः कर्तव्य इत्युक्तं भवति।

इति कृत्यकल्पतरौ मोक्षकाण्डे वैराग्यपर्व[1]।

1 This is mentioned thus in the विषयनिर्देश.

॥ १५ ॥

# अथ ज्ञानकर्मोपयोगः

तत्र महाभारते

मोक्षे हि त्रिविधा निष्ठा दृष्टा पूर्वैर्महर्षिभिः ।
ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः ॥
कर्मनिष्ठां वदन्त्यन्ये यतयः सूक्ष्मदर्शिनः ।
प्रहायोभयमप्येतद्ज्ञानं कर्म च केवलम् ॥
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ।

तथा

शुक उवाच ।

यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ॥
एतद्वै श्रोतुमिच्छामि तद्भवान् प्रब्रवीतु मे ।
एतयोऽन्योन्यवैरूप्ये वर्तते प्रतिकूलतः ॥
इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम् ।
कर्मविद्यामयावेतौ व्याख्यास्यामि सुताऽक्षरौ ॥
यां दिशं विद्यया यान्ति यां च गच्छन्ति कर्मणा ।
शृणुष्वैकमनाः पुत्र सङ्करं ह्येतदन्तरम् ॥
कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥

कर्मणा जायते प्रेत्य मूर्तिमान् षोडशात्मकः ।
विद्यया जायते नित्यमव्ययो ह्यव्ययात्मकः ॥
कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितरा नराः ।
तेन ते देहजातानि वशयन्त उपासते ॥
ये तु बुद्धिं परां प्राप्ता धर्मनैपुण्यदर्शिनः ।
न ते कर्म प्रपश्यन्ति कूपं नद्यां पिबन्निव ॥
कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचते ॥
यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न जीर्यते यत्र गत्वा यत्र गत्वा न वर्द्धते ॥

'धर्मनैपुण्यदर्शिनः' परमं धृतिसाधनं तारतम्यं विजानन्तः ।

यथाऽऽह मनुः[1]

अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनमिति ।

'भवाभवौ' जन्ममरणे । 'विद्यया' ब्रह्मज्ञानेन ।

मार्कण्डेयपुराणे

पुत्र उवाच

एवं संसारचक्रेऽस्मिन् भ्रमता तात संकटे ।
ज्ञानमेतन्मया प्राप्तं मोक्षसंप्राप्तिकारणम् ॥
विज्ञायतेऽत्र सर्वोऽयमृग्यजुःसामसंज्ञितः ।

'ऋग्यजुःसामभिः' बोधितः ।

1 Not found in मनुस्मृति but it is in the याज्ञवल्क्यस्मृति, १, ८

योगियाज्ञवल्क्यः

परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ।
कायक्लेशमयश्चैव कर्म नेच्छन्त्यपण्डिताः ॥
ज्ञानकर्मसमायोगात् परमाप्नोति पूरुषम् ।
पृथग्भावे न सिध्येत उभे तस्मात् समाश्रयेत् ॥
ज्ञानं प्रधानं न तु कर्महीनं
कर्म प्रधानं न तु बुद्धिहीनम् ।
तस्मात् द्वयोरेव भवेत्तु सिद्धिः
न ह्येकपक्षो विहगः प्रयाति ॥

'न सिध्येत' न मुच्येत । 'उभे' ज्ञानकर्मणी ।

बृहस्पतिः[1]

सत्यं यज्ञस्तपो दानमेतद्धर्मस्य लक्षणम् ।
धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥

मार्कण्डेयपुराणे

[2]उपयोगेन पुण्यानामपुण्यानां च पार्थिव ।
कर्तव्यमिति नित्यानामकामकरणात्तथा[3] ॥
असञ्चयादपूर्वस्य क्षयात्पूर्वार्जितस्य च ।
कर्मणो बन्धमाप्नोति शरीरं च पुनःपुनः ॥

'अकामकरणात्' काम्यकर्माकरणादित्यर्थः ।

[4]मनुः

सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च ।

1 संस्कारकाण्ड, ३
2 ३९, ६–७
3 अकालमरणात्तथा—ना
4 १२, ८८—

न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते।
न च सन्यसनादेव सिद्धिं समधिगच्छति॥
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥
कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते॥
यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते॥
नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।
शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः॥
यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥

'लोकेस्मिन्' अपवर्गमार्गाधिकृते। 'निष्ठा' स्थितिः। 'ज्ञानयोगेन सांख्यानां' सम्यक् ख्यातवन्तः साक्षात्कृतात्मतत्वाः सांख्याः, तेषां प्राधान्येनस्थितिरुक्ता। कर्माऽपि यथाप्राप्तमाश्रमविहितं ज्ञानपरिपाकार्थं प्रत्यवायपरिहारार्थं चाऽस्त्येव। 'कर्मयोगेन योगिनां'मिति सत्वयोगवतामीश्वराराधनार्थं कर्म कुर्वतां कर्मप्राधान्येन स्थितिः। आत्मसाक्षात्कारविज्ञानोपायत्वात्। तथा चोक्तम्—

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः।
यथाऽऽदर्शतलप्रख्ये पश्येदात्मानमात्मनि॥

'आत्मनि' बुद्धावित्यर्थः। पापक्षयश्च धर्मात् 'धर्मेण पापमपनुदति। तपसा ब्रह्म विजिज्ञासस्व' इति श्रुतेः। ज्ञानमपि सामान्यरूपमस्तीति क्वचित् किञ्चित् प्रधानमिति विशेषो न समुच्चये।

ज्ञानकर्मसमायोगात् परमाप्नोति पूरुषम् ।
पृथग्भावेन सिध्येत उभे तस्मात् समाश्रये

दिति योगियाज्ञवल्क्यवचनात् । ज्ञानादेव केवलान्मुक्तिरिति सर्वं श्रौतं स्मार्तं कर्म न कर्तव्यं बन्धहेतुत्वादिति निराकृतम् । "न कर्मणामनारंभान्नैष्कर्म्यं" इत्यादिना, नैष्कर्म्यं, पुण्यापुण्यरहितत्वं, मोक्षमित्यर्थः[1] । 'सन्यसनात्' उत्तमाश्रमग्रहणात् । 'असक्तः' फलसङ्गरहितः । "यज्ञार्थात् कर्मणोऽन्यत्रे"ति 'यज्ञ' शब्देन यज्ञपुरुष उच्यते । 'यज्ञो वै विष्णुरि'ति श्रुतेः । [2]तेनेश्वराराधनार्थं कर्म वर्जयित्वाऽन्यत् स्वर्गादिफलार्थं कर्म बन्धाय भवतीत्यर्थः ।

तथा च

[3]यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥

'यत्करोषि'स्नानादि । 'यदश्नासी'त्यत्राऽशनं प्राणाहुतिरूपम् ।

1 वी मि मोक्षप्रकाश, पृ २९९ —"कल्पतरुस्तु 'न कर्मणामनारम्भात् नैष्कर्म्यम्' इत्यादिना, 'नैष्कर्म्य' पुण्यरहितत्व मोक्षम् इति व्याचख्यौ । तद्भाष्यविरोधात् उपेक्ष्यम् "
शङ्कररामानुजभाष्ययो तत्पदस्य ज्ञाननिष्ठापरत्वेनोक्तत्वात्, मित्रमिश्रखण्डन युक्तमिति प्रतिभाव्यम् । परन्तु आनन्दतीर्थभाष्ये, नैष्कर्म्यपदस्य मोक्षार्थकत्व लक्ष्मीधरवदुक्तम्

2 ईश्वराराधनत्वेन कर्मानुष्ठान अङ्गीकुर्वता लक्ष्मीधरेण, 'परमपुरुषाराधनवेषस्य' इत्युक्तवता श्रीरामानुजाचार्याणा मतमनुसृतमिति शङ्का

3 भगवद्गीता, ९, २७–२८

तथा

[1]कर्मण्येवाऽधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिध्यसिध्योः समो भूत्वा समत्वं योग उच्यते ॥
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥

'कर्मण्येवेति 'कर्मण्येव आश्रमोचिते तवाऽधिकारोऽवश्यकर्तव्यत्वात्, न तु कर्मफलेषु। मा ते फलेष्वधिकार इत्येतस्याऽर्थं स्फुटयति—'मा कर्मफलहेतुर्भूरिति'। कर्मफलं कामयमानः 'कर्महेतुः' कर्मणोऽनुष्ठाता। 'मा भूस्त्वमिति' फलेच्छा त्वया मा कर्तव्येत्युक्तं भवति। 'मा ते सङ्गोऽस्त्वकर्मणीति' न चैवं सति कर्मकरण आसक्तिस्त्वया न कर्तव्या, किं तु कर्तव्यान्येव कर्माणीत्यर्थः। कथं तर्हि कर्माणि कर्तव्यानि? इत्याकांक्षायामाह—'योगस्थ' इत्यादि। यानि नित्यानि कर्माणि सन्ध्यावन्दनादीनि 'योगस्थः' फलसङ्गं त्यक्त्वा कर्मफलसिद्ध्यसिद्ध्योः हर्षविषादरहितत्वेन समो भूत्वा कुरु। ईश्वराराधनार्थे च क्रियमाणे कर्मणि नाऽस्ति वैषम्यम्। स एव कर्त्ता तदात्मकं च कर्मेति

1 भगवद्गीता, २, ४७–५१

